

कुर्रम कुर्रम
कुर्रम कुर्रम

# हल्के औ' कुरमुरे

७ स्वादों में–
कितने कुरमुरे, कितने मज़ेदार



लिज्जतदार
सात स्वाद में

# लिज्जत पापड़



श्री महिला गृह उद्योग लिज्जत पापड़

Mudra B: 5221 Hin

कविहृदयम्–

# सुखकल्पना

**आरोग्यमानृण्यमविप्रवासः सद्भिः मनुष्यैः सह सम्प्रयोगः।**
**स्वप्रत्यया वृत्तिरभीतवासः षड् जीवलोकस्य सुखानि राजन्।।** – महाभारतम्

"स्वास्थ्ययुतं जीवनम्, ऋणराहित्यं, चिरप्रवासस्य अभावः, सज्जनानां परिचयः प्रीतिः च, मनसः अनुरूपा वृत्तिः (उद्योगः), निर्भयं जीवनम् एतानि षट् सुखानि" इति वदति नीतिज्ञः विदुरः। एषा हि प्राचीनानां जीवनदृष्टिः आसीत्। तेषां सुखकल्पना इदानीन्तनकल्पनातः नितरां भिन्ना। श्लोके उक्तेषु अंशेषु एकैकम् अपि श्रमसाध्यम् एव। अतः एव इदानीन्तनाः जनाः एतान् अंशान् तत्त्वतः इच्छन्तः अपि व्यवहारतः न अनुसरन्ति।

रोगाभावः आरोग्यम् इति कल्पना अस्ति लोके। रोगः आगतः चेदपि वैद्याः औषधानि च सुलभलभ्यानि सन्ति एव। अतः आरोग्यरक्षणार्थं निरन्तरं व्यायामादिपरिश्रमः अपथ्यपरिहारादिव्रताचरणम् इत्यादिकं न इच्छति लोकः।

ऋणस्वीकरणम् अपमानकरम् इति भावना नास्ति लोके। स्वेच्छया ऋणं स्वीकुर्वन्ति। प्रत्यर्पणं विस्मृत्य साभिमानम् अटन्ति। अहो धाष्ट्र्यम्!

प्रवाससाधनानि इदानीं बहूनि। अतः प्रवासे कृते अपि एतस्मिन् काले न हानिः। किन्तु एकस्मिन् एव गृहे निवासः चेदपि सहभोजनार्थं, संलापार्थं च समयः न भवति यत् तत् किं न विप्रवासतुल्यम्?

सज्जनसङ्गतिं को वा इच्छति इदानीम्? गुणग्राहिता अस्ति चेदेव खलु सज्जनाः दृश्यन्ते? इदानीं तु सहवासः – दूरदर्शनस्य, उद्रेककारिणः पुस्तकस्य, व्यसनस्य वा।

मनोनुकूला वृत्तिः दैवात् कदाचित् लभ्यते। यतः वृत्तिप्राप्तिः इदानीं न पौरुषसाध्या। अन्येन अनुग्राह्या सा। अन्यः यादृशम् अनुगृह्णाति स एव प्रसादः।

गृहात् निर्गतः कश्चित् अपघातादिकं विना सकुशलं प्रत्यागतः चेत् सौभाग्यम् इदानीम्। कृतापराधाः सुखेन तिष्ठन्ति। अकृतापराधाः बन्दिनः भवन्ति। पापभीतेः लोपात्, दृढशासनस्य अभावात् च दुर्गुणानां प्राबल्यं सहजम्। एवं तर्हि किं कालः परिवृत्तः? न हि, मलिना जाता अस्माकं बुद्धिः। कालुष्यम् आगतम् अस्माकं व्यवहारे।

जिज्ञासा –

# वदधातुः ब्रूञ्धातुः च

शिष्यः- श्रीमन्! 'वदति' इति रूपस्य भविष्यत्कालरूपं वक्ष्यति इति, उत वदिष्यति इति?

आचार्यः- वदिष्यति इति।

शि - तस्यैव भूतकृदन्तरूपम् उक्तवान् इति, उत वदितवान् इति?

आ - उभयम् अपि न। उदितवान् इति।

शि - वक्तुम्, उक्त्वा इत्यादीनि वदधातोः एव खलु?

आ - न, वदधातोः तु वदितुम् उदित्वा इत्यादीनि रूपाणि।

शि - किं श्रीमन्? वदति – वक्तुम्, उक्त्वा, वदन्, उक्तवान्, वक्तव्यम् इत्यादीनि वदधातोः कृदन्तरूपाणि इति मया बाल्ये पठितं स्मर्यते खलु?

आ - बाल्ये पठितं स्मरतः भवतः स्मरणशक्तिः प्रशंसार्हा एव। किन्तु तानि कृदन्तरूपाणि वदधातोः तु न।

शि - एवं तर्हि मम अध्यापकः अशुद्धं पाठितवान् वा?

आ - प्रथमं वस्तुस्थितिं विवृणोमि, तत् अवधारयतु। ततः अग्रिमचिन्तनं भवतु।

* वद–व्यक्तायां वाचि इति एतस्य धातोः रूपाणि एतानि–

| | |
|---|---|
| भविष्यति – वदिष्यति | कर्मणि – उद्यते |
| तव्यत्प्रत्यये – वदितव्यम् | तुमुन्प्रत्यये – वदितुम् |
| क्त्वाप्रत्यये – उदित्वा | ल्युट्प्रत्यये – वदनम् |
| क्तवतुप्रत्यये – उदितवान् | शतृप्रत्यये – वदन् |

* ब्रूञ्–व्यक्तायां वाचि इति धातोः (वच-परिभाषणे इति धातोः वा) रूपाणि तु एवम्–

| | |
|---|---|
| भविष्यति – वक्ष्यति | कर्मणि – उच्यते |
| तव्यत्प्रत्यये – वक्तव्यम् | तुमुन्प्रत्यये – वक्तुम् |
| क्त्वाप्रत्यये – उक्त्वा | ल्युट्प्रत्यये – वचनम् |

क्तवतुप्रत्यये – उक्तवान्   शतृप्रत्यये – ब्रुवन्
(वचधातोः तु–वचन्)

एवं ब्रूञ्धातोः वदधातोः च रूपाणि। किन्तु बहूनाम् अत्रैव भ्रान्तिः। ब्रूञ्धातोः रूपाणि वदधातोः इति वदन्ति। उदितवान् उदित्वा इत्यादीनि रूपाणि न भवन्ति इति सधैर्यं प्रतिपादयन्ति अपि।

शि - श्रीमन्! एवं तर्हि बाल्ये मां यः पाठितवान् सः अध्यापकः अपि एवम् एव भ्रान्तः आसीत् इति मन्ये।

आ - तथा मा भावयतु। वस्तुतस्तु वदधातोः वदति, वदन्, वदिष्यति इत्यादीनि रूपाणि प्रसिद्धानि। तथैव ब्रूञ्धातोः उच्यते, वक्तव्यम्, उक्त्वा, उक्तवान् इत्यादीनि रूपाणि प्रसिद्धानि। धातुद्वयस्य अपि अर्थः समानः। अतः वाचा यत्र भावप्रकाशनं भवति तत्र प्रसिद्धिम् आश्रित्य यथासौकर्यं धातुद्वयस्य अपि रूपाणि स्वीकुर्वन्ति – प्रायः प्राथमिके स्तरे। भवतः अध्यापकः अपि एवम् एव कृतवान् स्यात्। किं तेन कण्ठतः उक्तं वा– 'वदधातोः एव उक्तवान्, उक्त्वा इत्यादीनि रूपाणि' इति?

शि - न। यत्र वाचा भावप्रकाशनं भवति तत्र वदति, उक्तवान्, उक्त्वा, वक्तुम् इत्यादीनि रूपाणि इति तेन प्रयोगपुरस्सरं सोदाहरणं बोधितम् आसीत्। तत्सन्दर्भे तेन धातुविषयः एव न उक्तः। अनन्तरकाले मया वदति इत्यस्य क्रियापदस्य 'वद्' धातुः मूलम् इति ज्ञातम्। साहचर्यबलात् उक्तवान्, उक्त्वा इत्यादीनाम् अपि वदधातुः एव मूलम् इति मया तर्कितम्।

आ - स्वयं भ्रान्तः सन् अध्यापके भ्रान्तिम् आरोपयति खलु?

शि - आं, मया प्रमादः कृतः। दोषः तु मम तर्के आसीत्, न तु अध्यापकस्य बोधने। श्रीमन्! एकस्मिन् एव अर्थे कुत्रचित् वदधातोः कानिचन रूपाणि प्रसिद्धानि, पुनः कुत्रचित् ब्रूञ्धातोः रूपाणि। एवं किमर्थम्?

आ - प्रसिद्धेः कारणं किमिति वदाम? 'निरङ्कुशाः कवयः' इतिवत् 'स्वतन्त्रः लोकः'। सौकर्यं चिन्तयता लोकेन एवं रूढिः कृता।



# चन्दमामा

फेब्रवरी-१९८९

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००




# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

निर्धनकुले जातस्य धनिककुले जातस्य च जीवने महदन्तरं भवति। धनिककुले जातस्य जीवनं यस्मात् स्तरात् आरभ्यते तं स्तरं प्राप्तुं निर्धनकुलजातेन स्वजीवने महान् परिश्रमः करणीयः भवति। प्रयत्ने कृते अपि कदाचित् स च स्तरः प्राप्तुं न शक्येत तेन।

एवम् एव संस्कृतगृहे तदितरगृहे च जातयोः जीवने अपि महत् अन्तरं दृश्यते भाषादृष्ट्या। संस्कृतगृहे यः जायते तस्य जीवनारम्भः एव उन्नतात् स्तरात् भवति। तदितरगृहे जातः कश्चित् तं स्तरं प्राप्तुं महान्तं प्रयासं कुर्यात्।

अतः भोः संस्कृतबान्धवाः! भवदीयं गृहं संस्कृतगृहं कुर्वन्तु, येन भवद्गृहे जातस्य शिशोः जीवनारम्भस्तरः भाषादृष्ट्या उन्नतः भवेत्। भवद्भिः इदानीं यत् सम्भाषणं गृहे क्रियेत तत् भाविनः शिशोः पैतृकी सम्पत्तिः भविष्यति।

एतादृशम् असाधारणं कार्यं कर्तुं महत् पाण्डित्यम् अपेक्षितं नास्ति। सामान्यतः यः सम्भाषणं कर्तुं शक्नोति सोऽपि एतत् साधयितुम् अर्हति। एतद्विपरीततया यः असदृशं पाण्डित्यं प्राप्य अपि सम्भाषणे न प्रवर्तते तदीयं पाण्डित्यं तदनन्तरीयस्य उपयोगाय न भवति। पण्डितः सन् सम्भाषणे अपि यः प्रवर्तते तस्य कुले जाताः निश्चयेन परमभाग्यवन्तः भविष्यन्ति।

सम्पुटः–५ फेब्रवरी–१९८९ सञ्चिका–११

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००

CHITRA

रसप्रश्नाः–

# हर्षोन्मादः

(सीतायाः अनुमतिं प्राप्य हनूमान् लङ्कातः प्रत्यागतवान्। प्रयाणसमये प्रवृत्तं समग्रम् अङ्गदादीन् उक्तवान् हनूमान्। ततः सुग्रीवदर्शनार्थं प्रस्थिताः ते मध्येमार्गं किञ्चन वनं दृष्टवन्तः। तत् प्रविश्य नाशितवन्तः। रामायणस्य एतां घटनाम् आधारीकृत्य अत्र केचन प्रश्नाः उपप्रश्नाः च सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. लङ्कातः प्रस्थातुम् उद्युक्तः हनूमान् कं गिरिम् आरूढवान्?
   (अ) हनूमतः प्रस्थानवेगात् हेतोः पर्वतस्य का गतिः जाता?
   (आ) हनूमान् ततः कां दिशम् अनुसृतवान्?

II. सीतावृत्तान्तम् अविलम्बेन निवेदयितुम् इच्छन्तः अङ्गदादयः हनूमान् च आकाशे गमनसमये एकं वनं दृष्टवन्तः। तस्य वनस्य नाम किम्?
   (अ) तत् वनं कस्य?
   (आ) तस्य वनस्य रक्षकः कः?
   (इ) वनरक्षकस्य वनस्वामिनः च सम्बन्धः कः?
   (ई) तस्मिन् वने किम् आसीत्?

III. वनरक्षकं कः उन्नीय अधः पातितवान्?

IV. वननाशं श्रुतवतः सुग्रीवस्य प्रतिक्रिया का?
   (अ) तथा प्रतिक्रिया किमर्थम्?
   (आ) प्रवेशानर्हम् अपि वनं हनूमदङ्गदादयः किमर्थं प्रविष्टवन्तः?
   (इ) कृतापराधान् तान् सुग्रीवः किमर्थं क्षान्तवान्?

उत्तराणि–

I. अरिष्टपर्वतम्। (अ) पर्वतः रसातलं गतः। (आ) उत्तरदिशम्।

II. मधुवनम्। (अ) सुग्रीवस्य। (आ) दधिमुखो नाम वानरः। (इ) दधिमुखः सुग्रीवस्य मातुलः। (ई) मदजनकं मधु आसीत्।

III. युवराजः अङ्गदः।

IV. वननाशं श्रुत्वा अपि सः नितरां सन्तुष्टः। (अ) हनूमदङ्गदादयः उपस्थिताः इति। (आ) 'कार्यं साधितम्' इति हर्षातिरेकेण। (इ) कृतकर्मणां चेष्टितं सोढव्यम् इति मत्वा।

# रसवार्ताः

## अल्पाकारकः वानरः



श्वेतव्याघ्राणां निमित्तं ख्यातस्य भुवनेश्वरसमीपस्थस्य नन्दनकाननस्य प्राणिसङ्ग्रहालये अमेरिकादेशतः मर्मोसाट्जातीयौ वानरौ आनीय स्थापितौ। तज्जातीयाः षडङ्गुलदीर्घं यावत् वर्धन्ते, तावदेव।

## परमवृद्धौ दम्पती

सोवियट्रशियादेशीयस्य इलियन् जफरोव्महोदयस्य इदानीं १२२ वर्षाणि। तस्य पत्न्याः वयः ११८ वर्षाणि। बाकुसमापस्थे प्रदेशे निवसतोः एतयोः दम्पत्योः द्विशताधिकाः पुत्र-पौत्र-प्रपौत्रादयः सन्ति। एतेषां सर्वेषां समक्षं गते सप्टम्बरमासे तयोः १०३तमः विवाहदिनोत्सवः संवैभवम् आचरितः।





## आपदि ऐकमत्यम्

सप्टेम्बर्मासे असामराज्ये महापूरपीडा जाता खलु? तत्समये विषसर्पाः, महाव्याघ्राः, वनगजाः इत्यादयः सोनिकपुरस्य सहायकशिबिरस्य समीपे जन्मजातं वैरं विस्मृत्य शान्तियुतं सहजीवनं कृतवन्तः। समीपे सञ्चरतः जनान् निर्लक्ष्य ते तत्र स्थितवन्तः।

## शरावाकारकं वस्तु किं तत्?

नारङ्गवर्णां कान्तिं निस्सारयत् अदृष्टपूर्वं शरावाकारकं वस्तुद्वयम्, एषु दिनेषु आकाशे उड्डयमानं दृष्टवन्तः टेल् अवीव् नगरवासिनः। तद्भयं किम्? कुतः आगतं तत्? इत्यस्य सन्देहस्य निवारणं कर्तुम् विज्ञानिनः इतोऽपि न शक्तवन्तः।



# मौनं हि रत्नायते

मङ्गलापुरस्य भूस्वामिनः तु वाचालप्रवृत्तिः। सः शीघ्रकोपी अपि। अतः सर्वे तदीयां वाचालतां जानन्तः अपि भूस्वामिनं तथा वक्तुं न शक्नुवन्ति स्म।

कदाचित् भूस्वामी वायुविहारार्थम् एकाकी प्रस्थितवान्। ग्रामस्य पार्श्वे एव सुन्दरः कश्चन पर्वतः आसीत्। पर्वतः आरोढव्यः इति भूस्वामिनः इच्छा जाता। पर्वतमूले कश्चन अजपालः तेन दृष्टः। सः तम् आत्मना सह आगन्तुं सूचयित्वा तेन सह वार्तालापं कुर्वन् पर्वतारोहणम् आरब्धवान्।

अजपालः तु मौनं पर्वतारोहणं करोति। भूस्वामी अजपालस्य प्रतिक्रियाम् अपि अनपेक्षमाणः निरन्तरं वदन् अग्रे गच्छति। अल्पे एव काले महत्या श्रान्त्या भूस्वामी कस्याश्चित् शिलायाः उपरि उपविष्टवान्।

"श्रीमन्! पर्वतारोहणसमये अधिकवार्तालापः न करणीयः। तेन आयासः वर्धते। अतः एव अहं पर्वतारोहणसमये मौनं तिष्ठामि। जीवनम् अपि पर्वतारोहणम् इव। तत्रापि मौनं रत्नायते" इति मन्दहासपूर्वकम् उक्तवान् अजपालः।

अजपालः अशिक्षितः चेदपि मार्मिकरूपेण मौनस्य महत्त्वं बोधितवान् आसीत्। एतदनन्तरं भूस्वामी मौनस्य महत्त्वं जानन् मितभाषी संवृत्तः।





# मृदुवचनम्

'शान्तपुरनामके ग्रामे पूर्वं रमेशः नाम कश्चन युवकः निवसति स्म। तदीयः पिता बहुभ्यः वर्षेभ्यः पूर्वम् एव दिवङ्गतः। माता एव तं पोषितवती आसीत्।

सः परिश्रमेण कार्यं करोति, किन्तु अविचार्य किमपि वदन् प्रमादं करोति। 'सदा विचार्य वक्तव्यम्, वचनानि मृदूनि भवेयुः' इति माता तदा तदा तं बोधयति। किन्तु रमेशः मातुः वचने श्रद्धां न प्रदर्शयति।

एकदा ग्रामप्रमुखः तम् आहूय उक्तवान्– "मम पिता इदानीं वार्धक्यकारणतः अतीव दुर्बलः जातः। तस्य कश्चित् साहाय्यकः आवश्यकः। अहं सदा ग्रामकार्ये निमग्नः। समयावकाशः एव नास्ति मम। ज्येष्ठः पुत्रः कृषिकार्ये निलीनः। द्वितीयः पुत्रः नगरे पठति। पुत्र्यौ सङ्गीताभ्यासे निमग्नौ। पत्न्याः तु पाकादिकार्यार्थम् एव समयः अपर्याप्तः। अतः भवान् मम पितुः साहाय्यकः भवति चेत् प्रतिमासं पञ्चशतं रूप्यकाणि ददामि" इति।

रमेशस्य द्वौ वृषभौ स्तः, एकं शकटं च अस्ति। अतः सः क्षेत्रकर्षणेन अन्येषां वस्तूनां नयनानयनेन च जीवति। एतेन यद्यपि आयः न्यूनः स्यात्, किन्तु जीवनं स्वतन्त्रं खलु? अन्यस्य गृहे कर्मकररूपेण कार्यं नाम दास्यम् इति भावयति रमेशः।

अतः सः ग्रामप्रमुखम् उक्तवान्– "किं वदति श्रीमन्! पितुः सेवायाः सौभाग्यं प्राप्तम् इति सन्तोषः अनुभोक्तव्यः। भवान् तु अन्यं नियोजयितुम् इच्छति। एवं चेत् पितृऋणात् कथं मुक्तः भविष्यति? अन्यस्य नियोजनं भवते रोचेत, न तु मह्यम्। अन्यच्च परगृहस्य कर्मकरत्वम् अहं सर्वथा न इच्छामि" इति।

"सुभद्रा"



एवम् एव पुनः कदाचित् धनिकः श्रीरामः उक्तवान्– "भोः, रमेश, श्वः मम पितुः श्राद्धम्। तदर्थं महती पाकव्यवस्था सङ्कल्पिता। किन्तु अकस्मात् पाचकः अस्वस्थः जातः। सः वदति– कोऽपि साहाय्यकः अस्ति चेत् समीपे स्थित्वा अहं निर्देशनं करोमि इति। चुल्लेः उपरि पात्रम् आरोपयितुम् अवतारयितुं च समर्थः दृढकायः कोऽपि अपेक्षितः। भवान् आगच्छति वा? एकस्य दिनस्य निमित्तं शतं रूप्यकाणि दास्यामि" इति।

तदा रमेशः असमाधानेन उक्तवान्– "अहं कृषिक्षेत्रे कार्यं कुर्वन् कृषिकः, न तु पाचकः। यथा मम देहे शक्तिः अस्ति तथैव भवतः पुत्राणाम् अपि शक्तिः अस्ति एव खलु? एकस्मिन् दिने किं ते पाककार्ये साहाय्यं कर्तुं न अर्हन्ति?" इति।

एतदनन्तरम् अन्यः धनिकः शेषाद्रिः तं जलोद्धरणकार्ये साहाय्यं कर्तुं प्रार्थितवान्। वैद्यः वीरभद्रः औषधपेषणार्थं तम् आहूतवान्। अन्यः कश्चित् गृहरक्षणकार्यार्थम् आगन्तुं तं सूचितवान्। किन्तु तेषु कार्येषु एकम् अपि न अङ्गीकृतवान् रमेशः। तान् सर्वान् तर्जयित्वा प्रेषितवान्।

कदाचित् रमेशस्य माता उक्तवती– "भवतः मातुलः 'स्वकार्यार्थं वृषभौ इच्छामि' इति वार्तां प्रेषितवान्। अतः वृषभौ दत्त्वा आगच्छतु" इति।

रमेशस्य मातुलः वेङ्कटेशः। तस्य तु रमेशविषये विशेषादरः। वेङ्कटेशः स्वपुत्रीं रमेशाय दातुम् इच्छति। एतत् रमेशः अपि जानाति। भाविनीं पत्नीं द्रष्टुं तस्यापि इच्छा आसीत् एव। अतः सः शकटेन मातुलगृहं प्रति प्रस्थितवान्।

यदा सः मातुलग्रामस्य समीपे गच्छन् आसीत् तदा कश्चित् बलशाली पुरुषः मध्येमार्गं तिष्ठन् गर्जितवान्– "भोः शकटात् अवतरतु" इति।

रमेशः शकटात् अवतीर्य धैर्येण पृष्टवान्– "कः भवान्?" इति।

सः पुरुषः हस्तबलात् रमेशं ततः अपसार्य शकटम् आरुह्य "एतत् शकटं मम एव"

इति उक्तवान्। यावत् रमेशः तस्य उपरि आक्रमणं कर्तुम् उद्युक्तः तावता समीपे स्थितः धनिकः दण्डं लीलया चालयन् धाष्ट्येन उक्तवान्– "अहम् एतस्य ग्रामस्य प्रमुखः। इदानीं भवान् ज्ञातवान् खलु सः पुरुषः कः इति? इतः मौनं प्रतिगच्छतु। तदेव क्षेमकरं भवतः" इति।

सः बलशाली पुरुषः शकटं चालयन् ग्रामं प्रति गतवान्। रमेशः म्लानवदनः सन् मातुलगृहं गत्वा मार्गे प्रवृत्तं सर्वं निवेदितवान्।

"सः बलशाली प्रायः मल्लयुद्धप्रवीणः रुद्रेशः एव स्यात्। एषु दिनेषु तस्य दुष्टता सीमाम् अतिक्रम्य वर्धमाना अस्ति" इति उक्तवान् रमेशस्य मातुलः वेङ्कटेशः।

रमेशः चिन्तापूर्वेण स्वरेण पृष्टवान्– "मम शकटं वृषभौ च मया प्रतिप्राप्तव्याः खलु? तत् कथम्?" इति।

"प्रतिप्राप्तिः प्रायः अशक्या एव इति मम मतिः। सः अपायकारी पुरुषः। अतः कोऽपि तस्य विरुद्धं किमपि न वदति। यदि कोऽपि तस्य अप्रियं वदेत् आचरेत् वा तर्हि तस्य मरणम् एव शरणम्" इति उक्तवान् वेङ्कटेशः।

"एतस्मिन् ग्रामे ज्येष्ठाः किं न सन्ति? एतस्य दुर्व्यवहारं निरोद्धुं कोऽपि किं न शक्नोति?" इति कोपेन पृष्टवान् रमेशः।

"ज्येष्ठाः कुतो वा न स्युः? किन्तु मल्लः रुद्रेशः तेषां पुरतः विनयेन व्यवहरन् तान् बहुधा उपकृतवान्। एवं तान् सर्वान् कृतज्ञताभावेन बद्ध्वा स्वयं दौष्ट्यम्





आचरति। अतः सः यत् करोति तत् निर्बाधं प्रचलति" इति उक्तवान् वेङ्कटेशः।

"एवं तर्हि मम शकटं वृषभौ च प्रतिप्राप्तुं कोऽपि मार्गः एव नास्ति?" इति सम्भ्रान्तः रमेशः पृष्टवान्।

"मार्गः कश्चित् अस्ति। किन्तु न सुलभसाध्यः। रुद्रेशपक्षे अस्मद्ग्रामज्येष्ठाः यथा सन्ति तथैव भवतः परतः अपि ग्रामज्येष्ठेषु द्वित्राः भवन्ति चेत् भवान् रुद्रेशं शकटादिकं प्रष्टुं शक्नुयात्। तादृशं बलम् अस्ति वा?" इति पृष्टवान् वेङ्कटेशः।

तदा रमेशः स्वग्रामे यद्यत् प्रवृत्तं तत् विस्तरेण निवेदितवान्। तदा असमाधानेन वेङ्कटेशः उक्तवान्– "कीदृशम् अकार्यं कृतवान् भोः! स्वाच्छन्द्येन व्यवहरतः रुद्रेशस्य एव ग्रामप्रमुखाणां साहाय्यम् अस्ति। परिश्रमेण जीवतः भवतः तत् नास्ति इति तु खेदस्य विषयः। इतः परं किं करोति भवान्? एकं तु– ग्रामप्रमुखाः क्षमां प्रार्थनीयाः। अन्यथा अस्मद्ग्रामीणस्य मल्लस्य रुद्रेशस्य पादौ ग्रहीतव्यौ। यत् उचितं तत् करोतु" इति।

"पादग्रहणं करणीयम् एव चेत् अस्मद्ग्रामप्रमुखाणां पादौ एव गृहणामि" इति उक्त्वा रमेशः स्वग्रामं गत्वा ग्रामप्रमुखस्य गृहं गतवान्।

ग्रामप्रमुखः कोपेन रमेशं पश्यन् पृष्टवान्– "अत्र किं कार्यं भवतः?" इति।

तदा रमेशः ग्रामप्रमुखं साष्टाङ्गं नमस्कृत्य उक्तवान्– "श्रीमन्! मया महान् अपराधः कृतः। भवादृशस्य गृहे दास्यम् अपि महते सौभाग्याय। परमपूज्यस्य भवतः पितुः सेवा पुण्यप्रदा एव। तादृशं कार्यम् अहम् अविवेकेन निराकृवान्। इदानीं मया विवेकः प्राप्तः। भवता किञ्चिदपि धनं दातव्यं नास्ति। एततक्षणतः एव भवतः पितुः सेवां कर्तुम् अहं सिद्धः" इति।

रमेशस्य एतत् विनयपूर्णं वचनं श्रुतवतः ग्रामप्रमुखस्य कोपः सर्वथा अपगतः।

"भोः, वस्तुतः अपराधः मम एव आसीत्। धनमदात् अहं स्वकर्तव्यं विस्मृतवान् आसम्। पितुः सेवार्थम् अन्यस्य नियोजनं

नाम पितुः तिरस्कारः इत्येव। एतत् सत्यं भवतः वचनात् ज्ञातम्। अतः मम पितुः सेवाम् अहम् एव करोमि'' इति उक्तवान् भूस्वामी।

रमेशः एवम् एव धनिकस्य शेषाद्रेः, वैद्यस्य वीरभद्रस्य इतरेषां ज्येष्ठानां च क्षमां प्रार्थितवान्। ते सर्वे रमेशविषयकं कोपं विस्मृत्य ''लघुकार्यार्थं भवान् यत् आहूतः तत् अस्माकम् एव दोषः'' इति उक्तवन्तः।

एतदनन्तरं कानिचन दिनानि रमेशः विशेषतः परोपकारविषये आसक्तिं प्रदर्शितवान्। रमेशे जातम् एतत् परिवर्तनं ज्ञात्वा सर्वे सन्तुष्टाः जाताः। ग्रामज्येष्ठाः अपि एतेन सन्तृप्ताः।

एतदनन्तरं रमेशः मातुलस्य ग्रामं गत्वा मल्लस्य रुद्रेशस्य गृहं गतवान्। ''भोः रुद्रेश! मम शकटे मदीयौ वृषभौ योजयतु। अहं शकटं नेतुम् आगतवान् अस्मि'' इति उच्चैः उक्तवान्।

रुद्रेशः गृहात् बहिः आगत्य रमेशस्य अभिज्ञानं प्राप्य गर्वेण भुजास्फालनं कुर्वन् उक्तवान्– ''भोः, कुत्र कं वदन् अस्मि इति जानाति खलु भवान्? शकटं नेतुम् इच्छति चेत् मां पराजित्य नयतु नाम'' इति।

''भवतः पराजयः किं क्लेशस्य कार्यम्?'' इति वदन् रमेशः अकस्मात् आक्रमणं कृत्वा रुद्रेशस्य मुखे उरसि च द्वित्रवारं मुष्ट्या ताडितवान्।

रमेशस्य मुष्टिप्रहारं सोढुम् अशक्तः मल्लः रुद्रेशः अधः पतितवान्।

रमेशः पतितं रुद्रेशं कण्ठे गृहीत्वा–



"भोः, अहं प्रतिदिनं परिश्रमेण कार्यं करोमि, स्मरतु। भवतः इव मम शरीरं न आलस्येन वर्धितम्" इति उक्त्वा धैर्येण ततः गत्वा वृषभौ शकटे योजयित्वा शकटं चालितवान्। मातुलगृहं गत्वा प्रवृत्तं सर्वं निवेदितवान्।

"ग्रामस्य ज्येष्ठैः सह आगच्छतु इति मया उक्तम् आसीत्। किन्तु एकाकी आगत्य तं ताडयित्वा अपि आगतवान् खलु?" इति आश्चर्यं प्रकटितवान् वेङ्कटेशः।

"आलस्येन शरीरं वर्धितवतः रुद्रेशस्य निग्रहणार्थं किमर्थं ग्रामप्रमुखैः सह आगमनम्? अहम् एकाकी एव समर्थः" इति उक्तवान् रमेशः।

"एतावत् धैर्यं भवतः यदि स्यात् तर्हि इतः पूर्वम् एव बलप्रदर्शनं कुतो वा न कृतम्?" इति पृष्टवान् वेङ्कटेशः।

"रुद्रेशस्य ग्रामज्येष्ठानां साहाय्यम् अस्ति इति भवता एव उक्तम्। तदुपरि बलस्य प्रयोगात् पूर्वं मद्ग्रामप्रमुखाणां प्रीतिः सम्पादनीया इति मया चिन्तितम्। तथैव कृतम् अपि। भवद्ग्रामीणाः ज्येष्ठाः मयि यदि दोषम् आरोपयेयुः तर्हि सत्यं समर्थयितुं दोषं खण्डयितुं च मम पक्षे मद्ग्रामज्येष्ठाः सन्ति। अतः रुद्रेशः इदानीं तूष्णीं तिष्ठति" इति साभिमानम् उक्तवान् रमेशः।

"अस्माकं मुखात् उत्तमानि वचनानि आगच्छन्ति चेत् कदाचितं अपराधः कृतः चेदपि सः सह्यते। यदि वचनानि मृदूनि न भवेयुः तर्हि न्यायमार्गः आश्रितः चेदपि अन्याय्यं सम्मुखीकरणीयं भवेत्। एतत् कटुसत्यं भवता स्वानुभवात् ज्ञातम्। एतेन अहम् अपि सन्तुष्टः अस्मि। अचिरात् एव मुहूर्तं निश्चित्य भवतः मम पुत्र्याः च विवाहं निर्वर्तयिष्यामि" इति उक्तवान् वेङ्कटेशः।

शकटेन आगतः रमेशः गृहं प्राप्य मातरं प्रवृत्तं सर्वं निवेदितवान्। तस्य धैर्ययुतं कार्यं वेङ्कटेशेन कृतं विवाहप्रस्तावं च श्रुत्वा माता सन्तुष्टा। अल्पे एव काले रमेशस्य विवाहः सम्पन्नः। अनन्तरं वेङ्कटेशः मृदूनि वचनानि वदन् सन्तोषेण चिरकालं जीवितवान्।





# वैद्यधर्मः

पर्वतपुरराज्ये उत्तमेशः नाम कश्चन प्रसिद्धः वैद्यः आसीत्। पर्वतपुरस्य राजा शिवप्रभुः। पुष्पपुरस्य राजा व्याघ्रसेनः शिवप्रभुतः द्विवारं युद्धे पराजयं प्राप्य प्रतिगतवान् आसीत्।

उत्तमेशः तु द्वयोः राज्ययोः सीमाप्रदेशे निवसति। अतः पर्वतपुरस्य पुष्पपुरस्य च प्रजाः अनारोग्यसन्दर्भे उत्तमेशस्य समीपम् आगत्य चिकित्सां प्राप्नुवन्ति स्म।

कदाचित् राजा शिवप्रभुः वैद्यम् उत्तमेशम् आहूय उक्तवान्– "वैद्यमहोदय! भवता शत्रुराज्यस्य प्रजानां चिकित्सा क्रियमाणा अस्ति इति श्रुतम्। एतत् अनुचितम्। इतःपरम् अपि एतत् अनुवृत्तं चेत् भवान् कठोरं दण्डनीयः भवेत्" इति।

राज्ञः आदेशं श्रुत्वा अपि उत्तमेशः आगतानां सर्वेषां चिकित्सां कुर्वन् एव आसीत्। राजा शिवप्रभुः अपि राजकार्येषु मग्नः एतां घटनां विस्मृतवान्।

कदाचित् राजा शिवप्रभुः मृगयार्थम् अरण्यं गतः रथेन प्रत्यागच्छन् आसीत्। मार्गे सः शिष्याभ्यां सह औषधमूलानां सङ्ग्रहणे मग्नम् उत्तमेशं दृष्टवान्।

तदा शिवप्रभुः पूर्वं कृतम् आदेशं स्मृतवान्। सः आत्मना सह आगच्छतः अश्वारोहिणः सैनिकान् पृष्ट्वा ज्ञातवान् यत् उत्तमेशः इतोऽपि पुष्पपुरराज्यस्य प्रजानां चिकित्सां कुर्वन् एव अस्ति इति।

अत्रान्तरे उत्तमेशः तच्छिष्यौ च राज्ञः समीपम् आगत्य नमस्कारं कृतवन्तः। राजा शिवप्रभुः उत्तमेशं कोपेन पश्यन् उक्तवान्– "भोः, भवान् श्रेष्ठः वैद्यः इति अहं जानामि। किन्तु भवान् मम आज्ञां धिक्कृत्य शत्रुराज्यस्य प्रजानां चिकित्साम्

अनुवर्तयन् अस्ति। एषः तु देशद्रोहः। अतः भवन्तं दण्डयन् अस्मि" इति। अनन्तरं सः 'उत्तमेशः बद्ध्वा आनेतव्यः' इति भटान् आदिश्य ततः गतवान्।

किञ्चिद्दूरं गमनसमये राज्ञः रथस्य चक्रस्य कीलकम् अकस्मात् पतितम्। तेन रथः मार्गपार्श्वस्थायां कुल्यायाम् अपतत्। राजा रथे उपविष्टः एव अधः अपतत्। अतः तस्य पादे मुखे इतरत्र च व्रणाः जाताः।

एतत् दृष्ट्वा उत्तमेशः सैनिकान् उद्दिश्य– "महाराजम् अश्वस्य उपरि आरोप्य समीपस्थं मम कुटीरं प्रति आनयन्तु" इति उक्त्वा सैनिकान् कुटीरं नीतवान्।

राजा यदा कुटीरं प्राप्तवान् तदा उत्तमेशः तदीयान् व्रणान् प्रक्षाल्य औषधलेपनं कृत्वा वस्त्रेण बद्ध्वा अन्तः गतवान्। तदा तस्य शिष्ययोः अन्यतरः प्रवीणः राजानं पृष्टवान्– "महाराज! देशद्रोहः कृतः इत्यतः खलु मम गुरुं दण्डनार्थं नयन् अस्ति? एवं तर्हि गुरुः भवतः शत्रुः इति खलु सिद्धम्?" इति।

राजा शिवप्रभुः किमपि न उक्तवान्। तदा प्रवीणः पुनः उक्तवान्– "एतस्यां परिस्थितौ मम गुरुः भवतः चिकित्सां यदि न कुर्यात् तर्हि भवतः गतिः का अभविष्यत् इति न पुनः वक्तव्यम् अस्ति। शत्रोः चिकित्सा न करणीया इति चेत् तेन कृताः भवतः चिकित्सा अपि अयुक्ता स्यात्। किन्तु वस्तुस्थितिः तथा नास्ति। वैद्यस्य धर्मः – रोगिणः चिकित्सा। आपदि स्थितः मित्रं वा शत्रुः वा इति विचिन्त्य चिकित्सा करणीया इति वैद्यशास्त्रे कुत्रापि न उक्तम्" इति।

प्रवीणस्य वचनं श्रुत्वा राजा अङ्गीकारपूर्वकं शिरः चालितवान्। तावता उत्तमेशः प्रकोष्ठतः बहिः आगतवान्। तं दृष्ट्वा राजा– "वैद्यवर्य! शत्रुमित्रभेदभावं विना यथापूर्वं सर्वेषां रोगिणां चिकित्सां करोतु। अत्र साहाय्यं किमपि अपेक्षितं चेत् मां निस्सङ्कोचं निवेदयतु" इति उक्त्वा स्वकीये कण्ठे स्थितं रत्नहारम् उत्तमेशस्य हस्ते समर्प्य परिवारेण सह राजधानीं गतवान्।





# पञ्च प्रश्नाः

कौशाम्बीनगरं पूर्वं सम्पद्भरितम् आसीत्। तत्समये सूर्यसेनः नाम राजा देशस्य परिपालनं कुर्वन् आसीत्। तस्य राज्ञः सुदीर्घकालानन्तरम् अपि सन्तानं न जातम्। अनन्तरं पुण्यफलात् इव महाराज्ञी गर्भवती जाता। यथाकाले प्रसूतवती च। तच्च सन्तानं पुत्री। स च शिशुः सुवर्णवर्णकान्त्या प्रकाशते। सुलोचना इति तस्य शिशोः नाम निश्चितम्। सुलोचना महत्या प्रीत्या पालिता।

पुत्र्याः प्राप्तिः सन्तोषकरी एव। तथापि महाराजस्य मनसि काचित् व्यथा सदा जागर्ति। 'मम तु पुत्रसन्तानं किमपि नास्ति। मम अनन्तरम् एतस्याः पुत्र्याः योगक्षेमं को वा निर्वहेत्? स्त्री नाम अबला। एतस्याः रक्षणव्यवस्था कथं वा भवेत्?' इति एतया चिन्तया सः प्राणान् अत्यजत्।

पितुः मरणसमये सुलोचना विवाहयोग्ये वयसि आसीत्। अपूर्वसुन्दर्याः तस्याः परिणयार्थम् अनेके राजकुमाराः अहमहमिकां प्रदर्शयन्तः आसन्। किन्तु तेषु कमपि परिणेतुं सा न इष्टवती। यतः ताम् परिणेतुम् इच्छन्तः राजकुमाराः सर्वे तस्याः रूपलावण्यम्, अपारां सम्पत्तिं च दृष्ट्वा आगताः। 'तादृशस्य कस्यचित् परिणयेन राज्यस्य प्रजानां च हितं धूलिसाद्भवति' इति तस्याः विचारः आसीत्। राज्यपालनार्थम् अपेक्षिताः विवेकः धैर्य-साहसादयः, दयार्द्रहृदयत्वं, परोपकारगुणः, अकुण्ठता कार्यदीक्षा च यस्य भवन्ति तादृशः एव राजकुमारः परिणेतव्यः इति तस्याः दृढः निश्चयः। 'एतेन एव पितुः आत्मा तृप्तिं



अनेकानि विचित्राणि दृश्यानि दृष्टवान्। तदाधारेण पञ्च प्रश्नान् सज्जीकरिष्यामि। तेषां पञ्चानाम् अपि प्रश्नानाम् उत्तराणि यः ज्ञात्वा आगमिष्यति तं राजकुमारं परिणेतुम् अर्हति भवती। एतां वार्तां सडिण्डिमघोषं प्रसारयतु'' इति उक्त्वा पञ्च प्रश्नान् तां श्रावितवान्।

गुरोः आदेशानुसारं सुलोचना स्वविवाहनियमं सर्वत्र सडिण्डिमघोषं प्रसारितवती। एतत् श्रुत्वा विभिन्नेभ्यः देशेभ्यः बहवः राजकुमाराः तां परिणेतुम् अग्रे आगतवन्तः। तेषु बहवः इतःपूर्वम् आगत्य प्रतिगताः एव।

एवम् उपस्थितेषु राजकुमारेषु एकोऽपि सुलोचनया पृष्टेषु प्रश्नेषु एकस्य अपि प्रश्नस्य युक्तम् उत्तरं वक्तुं न शक्तवान्। ते सर्वे निराशया प्रतिगतवन्तः।

एकदा नेपालदेशस्य राजकुमारः धीरसिंहः सुलोचनां दृष्ट्वा– ''भवत्याः प्रथमः प्रश्नः कः?'' इति पृष्टवान्।

''केभ्यश्चित् वर्षेभ्यः एतस्मिन् देशे एवं श्रूयमाणम् अस्ति यत् सकृत् दृष्टम्, पुनः अपि द्रष्टव्यम् इति आशा अस्ति इति। एतत् वचनं कुतः आगच्छति। एतस्य अन्तरार्थश्च कः? अयम् एव मम प्रथमः प्रश्नः'' इति उक्तवती सुलोचना।

''अस्तु तावत्। सप्ताहावधिकः अवधिः दत्तः चेत् एतस्य उत्तरं ज्ञात्वा आगत्य

प्राप्नोति' इति सा चिन्तयति।

एतेषु एव दिनेषु कुलगुरुः सुधाकराचार्यः तीर्थयात्रां समाप्य राजधानीं प्रत्यागतवान्। राजकुमारी सुलोचना गुरुं भक्त्या स्वागतीकृत्य प्रवृत्तं सर्वं निवेद्य स्वविवाहविषये आत्मना कृतं निर्णयं श्रावितवती। तथैव प्रार्थितवती यत् एतद्विचारानुगुणं वरान्वेषणे मार्गदर्शनं साहाय्यं च करणीयम् इति।

सुधाकराचार्यः तस्याः निर्णये सहमतिं प्रदर्शयन्– ''भवती पितुः अनुगुणा पुत्री। अतः वंशयोग्यतानुगुणं निर्णयं कृतवती। भवत्या यथा चिन्तितं तादृशस्य धीरोदात्तस्य पुरुषस्य चयने कश्चन मार्गः अस्ति। अहं वर्षद्वयं यावत् अनेकेषु देशेषु सञ्चरन्

वदिष्यामि" इति उक्तवान् धीरसिंहः।

"अस्तु" इति अङ्गीकारं सूचितवती सुलोचना।

धैर्यस्य साहसस्य च मूर्तिमत्स्वरूपं धीरसिंहः उत्साहेन अश्वम् आरुह्य पूर्वदिशम् अनुसृत्य वेगेन प्रस्थितवान्। एवं गमनसमये तेन कश्चन अरण्यप्रदेशः प्राप्तः। तत्र सः द्वयोः शृगालयोः रवं श्रुतवान्। धीरसिंहः पशुपक्षिणां भाषां जानाति स्म।

सः झटिति अश्वात् अवतीर्य वृक्षस्य मूले आक्रन्दनं कुर्वतोः शृगालयोः समीपं गत्वा पृष्टवान्– "किं प्रवृत्तम्?" इति।

"अत्र अनतिदूरे कस्याञ्चित् गुहायां कश्चन भयङ्करः खड्गमृगः निवसति। सः अस्माकं पुत्रान् पादेन मर्दयन् मारयति। अतः अस्माकं कुलवृद्धिः न भवति। वयम् अस्माकं पुत्रान् यत्र कुत्रापि स्थापयेम चेदपि सः मारयति एव। अतः एव रोदनम् अस्माकम्" इति उक्तवन्तौ तौ शृगालदम्पती।

"कुत्र सः? प्रदर्श्यतां सः दुष्टः खड्गमृगः" इति उक्तवान् धीरसिंहः। शृगालः अग्रे गच्छन् मार्गप्रदर्शनं कृतवान्।

खड्गमृगस्य गुहायाः द्वारसमीपं गतवन्तौ शृगालः धीरसिंहः च। धीरसिंहः अन्तः दृष्टिं प्रसारितवान्। खड्गमृगः गाढनिद्रायां मग्नः आसीत्। सुप्तस्य मृगस्य मारणं धीरस्य लक्षणं न इति आलोच्य धीरसिंहः गुहायाः पुरतः स्थितं वृक्षम् आरुह्य उपविष्टवान्।



किञ्चित्कालानन्तरं खड्गमृगः निद्रातः उत्थाय गुहातः बहिः आगतवान्। धीरसिंहः हठात् खड्गमृगस्य उपरि आक्रमणं कृत्वा परशुना एकेन एव प्रहारेण तस्य शिरसः छेदनम् अकरोत्। खड्गमृगः प्राणरहितः जातः।

धीरसिंहस्य धैर्यं, साहसं, बलं च दृष्ट्वा शृगालदम्पती उक्तवन्तौ– "राजकुमार! पशुजातीयानाम् अस्माकं निमित्तं भवान् यत् उपकारं कृतवान् तत् आजीवनं स्मरावः। एतम् अरण्यप्रदेशं भवान् किमर्थम् आगतः? किं देवः एव आवयोः साहाय्यार्थं प्रेषितवान्, उत किमपि अन्यत् कारणम् अस्ति?" इति।

धीरसिंहः आत्मनः आगमनस्य कारणं निवेदितवान्। "आवाम् अपि तादृशं वचनं



श्रुतवन्तौ।किन्तु तत् कुतः आगच्छति इति न जानीवः। भवान् तु धैर्यवान् साहसी च। जीवने असाध्यं किमपि नास्ति इति आलोच्य सर्वत्र अन्वेष्टुम् इच्छन् पूर्वस्यां दिशि आगतवान् स्यात् इति भावयावः। एतत् अरण्यम् अतिक्रम्य वामतः परिक्रम्य गच्छतु। तत्र भवान् विजयं प्राप्स्यति'' इति उक्त्वा तौ शृगालदम्पती धीरसिंहं प्रेषितवन्तौ।

धीरसिंहः अरण्यम् अतिक्रम्य पादाभ्यां गच्छन् लता-गुल्म-प्रभृतिभिः युक्तं समतलप्रदेशं प्राप्तवान्। आयासपरिहारार्थं कस्यचित् वृक्षस्य अधः उपविष्टवान्।

तदा सः सर्पद्वयं दृष्टवान्। महासर्पः लघुसर्पं मारयितुं प्रयत्नं कुर्वन् आसीत्। लघुसर्पः आत्मरक्षणार्थं महान्तं प्रयत्नं कुर्वन् आसीत्। धीरसिंहः लघुसर्पं रक्षितुम् इच्छन् महासर्पस्य उपरि खड्गप्रहारार्थम् उद्युक्तः। तावता तौ सर्पौ गन्धर्वरूपेण स्थितवन्तौ।

"किम् एतत्? कौ भवन्तौ? किमर्थम् एवं परस्परहिंसायां मग्नौ?" इति पृष्टवान् धीरसिंहः।

"अहं बाल्ये अज्ञानवशात् एतस्य अपकारं कृतवान्। तदा आरभ्य एषः वैरं साधयन् सदा माम् एवं पीडयन् अस्ति" इति उक्तवान् कनिष्ठः गन्धर्वः।

"अज्ञानात् कृतः अपराधः क्षन्तव्यः। एतत् एव ज्येष्ठानां लक्षणम्। इतःपरं भवद्भ्यां परस्परद्वेषं विस्मृत्य प्रेम्णा व्यवहारः करणीयः। एतेन एव भवतोः हितं सिध्यति" इति धीरसिंहः तौ नीतिं बोधितवान्।

एतत् श्रुत्वा तौ गन्धर्वौ उक्तवन्तौ– "चिरकालात् अनुवर्तमानं वैरं भवान् निवारितवान्। मैत्रीं च उपस्थापितवान्। भवदीयम् उपकारं कदापि न विस्मरावः। प्रत्युपकाररूपेण आवाभ्यां किं करणीयम् इति वदतु। आवां ऋणमुक्तौ भवितुम् इच्छावः" इति।

धीरसिंहः आत्मनः आगमनस्य कारणं निवेदितवान्। "भवदुक्तं सत्यम्। एतादृशं वचनम् आवाभ्याम् अपि श्रुतम्। इतः किञ्चिद्दूरं गत्वा दक्षिणतः परिवृत्य गच्छतु। तत्र भवान् एकं तटाकं पश्यति। अग्रे किं करणीयम् इति भवान् तत्र एव ज्ञास्यति।

भवतः विजयः तु निश्चयेन भविष्यति'' इति आशिषा अनुगृह्य ततः अदृश्यतां गतवन्तौ तौ।

धीरसिंहः तयोः सूचनानुसारं अग्रे गत्वा तटाकं दृष्टवान्। सः विश्रान्त्यर्थं तटाकस्य तीरे शिलायाः उपरि उपविष्टवान्। तावता तटाकात् काचित् मत्स्यकन्या उत्थाय आगतवती। धीरसिंहस्य हस्तं गृहीत्वा तम् उत्थाप्य तटाकस्य अन्तः नीतवती।

तटाकस्य अन्तः रमणीयम् उद्यानम् आसीत्। सुदीर्घायां कुल्यायां विमलं जलं सशब्दं प्रवहति स्म। तत्रत्यप्रदेशः तृणमयेन वस्त्रकटेन आच्छन्नः इव भासते स्म। उद्याने भव्यं भवनं दृश्यते स्म।

मत्स्यकन्या धीरसिंहं तस्य भवनस्य विशालस्य मण्डपस्य अन्तः नीत्वा नवरत्नखचिते सिंहासने उपवेशितवती। मण्डपस्य चतुर्षु कोणेषु चतसृणां सुन्दरीणां स्त्रीणां चित्रपटाः आसन्। एकत्र चित्रं न दृश्यते स्म। धीरसिंहम् आनीतवती सा मत्स्यकन्या स्वयम् अपि पञ्चमचित्रपटस्य रूपेण परिवृत्य रिक्तं तत् स्थलं पूरितवती।

किञ्चित्कालं मौनं स्थित्वा धीरसिंहः निर्मानुषं तत् भवनं विहाय बहिः आगतवान्। यदा बुभुक्षा अनुभूता तदा वृक्षेषु स्थितानि पक्वानि फलानि अवचित्य खादितवान्। किन्तु तेन बुभुक्षा न शान्ता। कुल्यायां स्थितं जलं यावत् पीतं चेत् अपि पिपासा न शान्ता। तदीया बुभुक्षा पिपासा च यथापूर्वम् आसीत्।

सूर्यास्तः जातः। क्रमशः अन्धकारः





व्याप्तः। धीरसिंहः पुनः अपि भवनं प्रविष्टवान्। यदा सः मण्डपं प्रविष्टवान् तदा दीपाः स्वयं प्रकाशिताः जाताः। भित्तौ स्थितेषु पञ्चसु चित्रेषु स्थिताः स्त्रियः सजीवाः सत्यः धीरसिंहं परितः सञ्चरन्त्यः गायन्त्यः नृत्यं कर्तुम् आरब्धवत्यः। समग्रा रात्रिः नृत्येन गीतेन विनोदेन च यापिता। प्रातःकालारम्भे ताः स्त्रियः चित्रपटं प्रविश्य चित्ररूपेण स्थितवत्यः। तानि चित्राणि यथापूर्वं भित्तौ स्थितानि दृश्यन्ते।

धीरसिंहः अत्याश्चर्येण भवनं समग्रं परिशील्य परीक्षितवान्। कस्माच्चित् रन्ध्रतः काश्चन पिपीलिकाः पङ्क्तिरूपेण आगच्छन्त्यः आसन्। धीरसिंहः भित्तिम् अङ्गुल्या ताडयित्वा परीक्षितवान्। भित्तेः अपरस्मिन् पार्श्वे रिक्तता अस्ति इति तेन तर्कितम्। झटिति सः भित्तिं पातितवान्। तत्र तेन काचित् प्राचीना कुञ्चिका, अन्यत् वस्तु च लब्धम्। तस्याः कुञ्चिकायाः आधारेण भवनस्थानां सर्वेषां प्रकोष्ठानां तालम् उद्घाटयितुं सः प्रयत्नं कृतवान्। किन्तु कस्यापि प्रकोष्ठस्य द्वारम् उद्घाटयितुं सः न शक्तवान्। अन्ते अन्तिमस्य प्रकोष्ठस्य तालं कथञ्चित् उद्घाटयितुं शक्तवान् सः।

तस्मिन् प्रकोष्ठे अल्पा काचित् पेटिका आसीत्। सा पेटिका अपि कीलिता एव। तस्याः पेटिकायाः तालस्य उद्घाटनार्थं कुञ्चिकाम् अन्विष्टवान्। एतदर्थम् अटनसमये तस्य पादः कयाचित् कुञ्चिकया घट्टितः। तदनन्तरक्षणे सा अयःपेटिका उद्घाटिता जाता। पेटिकायाः अन्तः ताम्रपटः आसीत्। तत्र कानिचन अक्षराणि दृष्टानि। "अत्रत्यं सर्वं माया। एतस्य उद्यानस्य मध्ये स्थितं सुवर्णवृक्षम् उत्पाटयितुं यः शक्नोति तादृशः वीरः एव एतां मायां ज्ञातुं शक्नोति" इति तस्मिन् ताम्रपटे लिखितम् आसीत्।

धीरसिंहः उत्साहेन भवनात् निर्गत्य उद्यानं प्रविष्टवान्। ताम्रपटे यथा निर्दिष्टं तथैव उद्यानस्य मध्ये सुवर्णवृक्षः आसीत्। तस्य उत्पाटनार्थं बहुधा प्रयत्नं कृतवान् धीरसिंहः। किन्तु तेन सफलता न प्राप्ता।

किञ्चिदनन्तरं तस्य दृष्टिः वृक्षपार्श्वे स्थितस्य सुवर्णसस्यस्य उपरि पतिता।

धीरसिंहः तत्सस्यम् उत्पाट्य दूरे क्षिप्तवान्। अनन्तरक्षणे सः महान् सुवर्णवृक्षः 'लट्लट्' इति शब्देन सह पतितः। पतनशब्दं श्रुत्वा आघातं प्राप्य धीरसिंहः मूर्च्छां गतः।

पुनरपि क्षणकालस्य अनन्तरं धीरसिंहः सचेतनः जातः। सः नेत्रे निमील्य परितः दृष्टिं प्रसारितवान्। इदानीं तत्र न उद्यानम् अस्ति, न वा सुन्दरं भवनम्। याः कन्यकाः रात्रौ तं परितः गायन्त्यः नृत्यं कृतवत्यः आसन् ताः इदानीं तस्य समीपम् आगत्य स्थितवत्यः।

"काः भवत्यः? किम् एतत् प्रवर्तते? एषा माया कथं प्रवर्तते? किमर्थं च प्रवर्तते?" इति धीरसिंहः ताः पृष्टवान्।

"वयम् इतः दशयोजनदूरे स्थितस्य मायावतीनगरस्य राजकुमार्यः। प्राप्तवयस्काः वयम् 'अस्माकं विवाहः निर्वर्तनीयः' इति पितरं प्रार्थितवत्यः। अस्माकं विवाहविषयिणीं त्वरां दृष्ट्वा सः कुपितः। सः अस्मान् एतस्मिन् मायाभवने बन्धने स्थापितवान्। वयं विवेकं प्राप्य क्षमां प्रार्थितवत्यः। तदा सः उक्तवान्– 'यः भवतीः एतस्मात् मायाभवनात् विमोचयितुं शक्नोति सः एव योग्यः वरः' इति। तादृशस्य वीरस्य प्रतीक्षां कुर्वत्यः आस्म। चिरकालात् अनन्तरं मायायाः भेदने समर्थं महानुभावं भवन्तं दृष्टवत्यः। इदानीं भवान् अस्मान् परिणयतु इति प्रार्थयामहे" इति उक्तवत्यः ताः कन्यकाः।

"अहम् अन्यस्याः समस्यायाः समाधानस्य अन्वेषणार्थम् उद्युक्तः अस्मि।



विवाहादिविषयं चिन्तयितुं मम इदानीं सर्वथा समयावकाशः नास्ति। भवतीनां प्रार्थना निराकृता यत् तदर्थं क्षन्तव्यः अहम्" इति उक्त्वा धीरसिंहः अग्रे गतवान्।

किञ्चिद्दूरम् अग्रे गमनानन्तरं सः श्रुतवान्– "सकृत् दृष्टवान्, पुनः द्रष्टव्यम् इति आशा अस्ति" इति।

यतः स च ध्वनिः आगतः तस्यां दिशि वेगेन गतवान् धीरसिंहः। तत्र वृक्षस्य अधः कश्चित् राजकुमारः उपविष्टः आसीत्। सः अतीव क्षीणः आसीत्।

"कः भवान्? किमर्थम् एवं क्षीणं जातः?" इति तं पृष्टवान् धीरसिंहः।

"अत्र समीपे एव मायामन्दिरम् अस्ति। तत् प्रविष्टेषु राजकुमारेषु अहम् अपि अन्यतमः। मायाभवने स्थितासु राजकुमारीषु कस्याश्चित् सौन्दर्येण नितराम् आकृष्टः अहम्। ताम् एव परिणेतुम् इष्टवान्। किन्तु तस्मात् भवनात् कदाचित् बहिरागतः पुनः तं भवनं प्रतिगन्तुं मार्गं ज्ञातुम् अशक्नुवन् बहुधा अटनेन अपि साफल्यम् अप्राप्य श्रान्त्या एवम् उपविष्टवान् अस्मि। याम् अहं परिणेतुम् इष्टवान् तां सकृत् दृष्टवान्। सा पुनः द्रष्टव्या इति महती इच्छा। किन्तु तस्याः इच्छायाः पूर्तिः भवति वा न वा इति न जानामि" इति उक्तवान् सः राजकुमारः।

धीरसिंहः तं राजकुमारम् आत्मना सह नीत्वा मायाभवनं पुनः प्रविष्टवान्। सः राजकुमारः यस्याम् अनुरक्तः, तस्याः तस्य च विवाहं निर्वर्तितवान्।

अनन्तरं धीरसिंहः कौशाम्बीनगरं प्रत्यागत्य सुलोचनायाः समीपं गत्वा आत्मना दृष्टं समग्रं निवेद्य तया सूचितं वचनं कुतः आगच्छति इति, तस्य वचनस्य तात्पर्यं किम् इत्यपि सविस्तरम् उक्तवान्।

सुलोचना एतत् श्रुत्वा– "भवता मया पृष्टस्य प्रथमप्रश्नस्य उत्तरं सम्यग् एव उक्तम्। इतःपरं तादृशं वचनं न श्रूयते। द्वितीयं प्रश्नं श्वः श्रावयिष्यामि" इति उक्त्वा धीरसिंहं विश्रान्तिगृहं प्रति प्रेषितवती।






# प्रतिज्ञाभङ्गः

यदा यदा त्रिविक्रमः आगच्छति तदा सर्वदा कथातरङ्गान् उत्पादयन्तं कथासागरं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अयि राजन्! केनचित् असमर्थेन कुयुक्तिकेन वशीकृतः इव भवान् पिशाचसञ्चारयोग्ये अस्मिन् श्मशानमार्गे, तदपि मध्यरात्रे सञ्चरति खलु? भवतः दयनीयां दशां दृष्ट्वा अहं नितरां खिन्नः। कस्यचित् परममूर्खस्य कार्यं भवता प्रतिज्ञातं स्यात् वा इति मम सन्देहः। सामर्थ्यशालिनः नीतिमन्तः अपि कदाचित् स्वप्रतिज्ञां पालयितुं न शक्नुवन्ति। भवतः अपि तादृशी दशा न भवेत् इति मम आशयः। उदाहरणरूपेण वज्रकायस्य कथां श्रावयामि।

वेतालकथा



कथां शृण्वतः गच्छतः भवतः मार्गायासः तेन परिहृतः भवेत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं सिन्धूरदेशं सिंहभूपालः नाम राजा पालयन् आसीत्। तस्य अद्वितीया पुत्री सुचित्रा। सा अनुपमसौन्दर्यवती। तस्याः सौन्दर्यं समग्रे लोके प्रसिद्धम् आसीत्। प्राप्तवयस्कायाः तस्याः विवाहः करणीयः इति निश्चितवान् सिंहभूपालः। एतां वार्तां श्रुत्वा बहवः राजकुमाराः तां परिणेतुम् इच्छन्तः दूतद्वारा पत्राणि प्रेषितवन्तः। किन्तु सुचित्रा तेषु कमपि न इष्टवती।

यः अप्रतिमः वीरः धैर्यवान् बुद्धिमान् च भवति सः एव परिणेतव्यः इति तस्याः विचारः।

मन्त्रिणः भानुवर्मणः चन्द्रवर्मा नाम पुत्रः आसीत्। पिता भानुवर्मा स्वार्थसाधने कुतन्त्रनिर्माणे च महाचतुरः चेत् पुत्रः चन्द्रवर्मा असमर्थः, भीरुः, दुराशापीडितश्च आसीत्। केनापि उपायेन राजकुमारी सुचित्रा परिणेतव्या इति चन्द्रवर्मणः आशयः। सः स्वमनोभिलाषं पितरं निवेदितवान्।

पुत्रस्य विचारं श्रुत्वा पिता असमाधानेन उक्तवान्– ''कीदृशी आशा भोः भवतः! भवान् खड्गग्रहणम् एव सम्यक् न जानाति। सा तु पराक्रमिणम् एव परिणेतुं सङ्कल्पितवती। एवं स्थिते कथं भवतोः परिणयः?'' इति।

तदा चन्द्रवर्मा पितरं सूचितवान्– ''तात! तन्त्रनिर्माणे भवान् कौटिल्यम् अपि अतिशेते इति लोके प्रसिद्धिः अस्ति। अतः महापुरुषः इति प्रसिद्धिम् अहं यथा प्राप्नुयां तथा किमपि तन्त्रं करोतु। दश जनाः मां तथा श्लाघन्ते चेत् पुनः राजकुमार्याः परिणयः सुलभः स्यात्'' इति।

मन्त्री भानुवर्मा क्षणकालम् आलोच्य– ''एवं तर्हि भवान् एकं लघु साहसकार्यं करोतु। नगरसीमायाः पूर्वस्यां दिशि कश्चन व्याघ्रः ग्रामीणान् खादन् अस्ति इति मया श्रुतम्। भवान् तं व्याघ्रं मारयितुं प्रयत्नं करोतु। व्याघ्रं मारयितुं शक्तः चेत् युवराज्ञी भवतः हस्तगता इव'' इति सूचितवान्।

एतत् अङ्गीकृत्य चन्द्रवर्मा व्याघ्रस्य दिशि गतवान् इति तु सत्यम् एव, किन्तु अरण्यस्य प्रवेशार्थं धैर्यम् अप्राप्नुवन् सः तत्रैव स्थितवान्। तत्समये कश्चन उन्नतः दृढकायः पुरुषः मृतं व्याघ्रं कञ्चन स्कन्धे आरोप्य अरण्यतः बहिः आगतवान्।



तं दृष्ट्वा आश्चर्यम् अनुभवन् चन्द्रवर्मा पृष्टवान्- "श्रीमन्! एतत्प्रदेशे नरभक्षणं यः कुर्वन् आसीत् सः व्याघ्रः एषः एव वा? भवान् तु निरायुधः दृश्यते। कथं तर्हि एतं व्याघ्रं मारितवान्?" इति।

तदा सः दृढकायः हसन् उक्तवान्– "मम नाम वज्रकायः इति। अहं धवलगिरिराज्यस्य सैन्ये दलपतिः आसम्। असमर्थान् भीरून् च पश्यामि चेत् मम जुगुप्सा भवति। ह्यः मम राज्ये काचित् घटना प्रवृत्ता। तया अस्माकं सेनानायकस्य असामर्थ्यं मया ज्ञातम्। असमर्थस्य अधीने कार्यं कर्तुं न इच्छामि। भीरूणाम् उपरि खड्गप्रयोगं न करोमि इति प्रतिज्ञां कृत्वा धवलगिरिं परित्यज्य आगतवान् अहम्। मार्गे अरण्ये एषः व्याघ्रः मम सम्मुखम् आगतः। एतं मुष्टिप्रहारेण मारयित्वा स्कन्धे आरोप्य एवम् आगतवान्" इति।

एतत् श्रुत्वा चन्द्रवर्मा वज्रकायं साष्टाङ्गं प्रणम्य– "भोः, खड्गग्रहणे अपि असमर्थः, कश्चित् सामान्यः अहम्। कृपया भवान् एतस्य व्याघ्रस्य कलेवरं मह्यं ददाति चेत् एतत् प्रदर्श्य राजतः किमपि पारितोषिकं प्राप्नुयाम्" इति दैन्येन प्रार्थितवान्।

वज्रकायः प्रत्युत्तरं किमपि अदत्त्वा चन्द्रवर्माणं जुगुप्सया पश्यन् तत् व्याघ्रकलेवरं तत्रैव पातयित्वा ततः निर्गतवान्।

चन्द्रवर्मा महता कष्टेन व्याघ्रस्य कलेवरं महाराजस्य समीपं नीतवान्। 'व्याघ्रः मया एव लीलया मारितः' इति उक्त्वा सः राजानं पृष्टवान्– "मत्तः अपि श्रेष्ठः पराक्रमी अन्यः स्यात् इति भावयति वा भवान्?" इति।

राजा स्वकीयायाम् अङ्गुलौ स्थितम् अङ्गुलीयकं चन्द्रवर्मणे यच्छन् मन्दहासपूर्वकं पृष्टवान्– "व्याघ्रं यः



मारितवान् सः एव श्रेष्ठः पराक्रमी इति मया अङ्गीकृतं चेत् यः राक्षसं राज्यं वा जेष्यति सः किमिति वक्तव्यः?" इति।

चन्द्रवर्मा राज्ञः वचनं श्रुत्वा लज्जितः सन् प्रतिवचनं किमपि अदत्त्वा साक्षात् गृहम् आगतवान्। पितरं प्रवृत्तं समग्रं निवेदितवान्।

तदा मन्त्री भानुवर्मा उक्तवान्– "एवं वा? तर्हि भवान् यावच्छीघ्रं वज्रकायः कुत्र अस्ति इति जानातु। अनन्तरं तस्य व्यवहारस्य परीक्षणार्थं गूढचरान् नियोजयतु। एवं न कृतं चेत् राजकुमारी अचिरात् एव हस्तच्युता भवेत्" इति।

चन्द्रवर्मा तद्दिने एव अरण्यं गतवान्। वज्रकायस्य वसतिस्थानं ज्ञात्वा तत् गूढचरान् सूचितवान्। वज्रकायः किं किं करोति इति सुसूक्ष्मं ज्ञात्वा निवेदनीयम् इति गूढचरान् आदिष्टवान् च।

एकदा वज्रकायः पर्वतप्रान्ते सञ्चरन् आसीत्। तदा पार्श्वस्थायाः गुहातः कश्चन गर्जनध्वनिः आगतः– "कः सः? मम गुहायाः पुरतः सञ्चरतः भवतः कियत् धाष्टर्यम्? तिष्ठतु तत्रैव" इति।

वज्रकायः गुहायाः अन्तः दृष्टिं प्रसारितवान्। तत्र गजबलः नाम राक्षसः आसीत्। सः परशुं गृहीत्वा गुहातः बहिः आगत्य वज्रकायस्य प्रहारार्थम् उद्युक्तः। तावता वज्रकायः विद्युद्वेगेन पार्श्वे गत्वा झटिति परिवृत्य आक्रमणेन गजबलस्य हस्ते स्थितं परशुं वशीकृतवान्। तेनैव परशुना राक्षसस्य हस्तौ पादौ च छित्वा किमपि अप्रवृत्तमिव व्यवहरन् मौनं ततः गतवान् वज्रकायः।

दूरतः एतत्सर्वं दृष्ट्वा गूढचराः भानुवर्माणं चन्द्रवर्माणं च निवेदितवन्तः। तत्क्षणे एव भानुवर्मा चन्द्रवर्माणं सूचितवान् यत् वस्त्राणि तत्र तत्र छित्वा शरीरे कांश्चन व्रणान् कृत्वा महाराजसमीपं गच्छतु इति।

चन्द्रवर्मा सिंहभूपालस्य समीपं गत्वा– "प्रभो! मम परमपराक्रमं निरूपयितुम् इच्छन् गजबलनामकं राक्षसं सम्मुखीकृत्य घोरं युद्धं कृत्वा तस्य हस्तौ पादौ च कर्तयित्वा अत्र आगतवान् अस्मि" इति उक्तवान्।

तदा राजा उक्तवान्– "एवं वा? भवतः वचनेषु कथं विश्वसिमि? यतः पूर्वतनघटना काचित् मम मनसि इतोऽपि अस्ति। पूर्वं कदाचित् मया सह मृगयार्थम् आगतः भवान् भल्लूकं दृष्ट्वा भीत्या वृक्षम् आरुह्य निलीय स्थितवान्। अतः इदानीन्तनं भवतः वचनं सत्यं वा न वा इति मया परीक्ष्य ज्ञातव्यम्। दिनद्वये सर्वं ज्ञास्यामि" इति।

अनन्तरं राजा गुप्तचरान् आहूय गजबलराक्षसविषये सर्वं ज्ञात्वा आगन्तव्यम् इति आज्ञां कृतवान्।

ते ततः गत्वा वज्रकायेण सह आगत्य वास्तविकीं परिस्थितिं महाराजं निवेदितवन्तः।



सिंहभूपतिः वज्रकायस्य आकृतिं, सम्भाषणशैलीं, गाम्भीर्यं, निरहङ्कारं व्यवहारं च दृष्ट्वा एव ज्ञातवान् यत् एषः वस्तुतः अपि पराक्रमशाली इति। अतः राजा सुचित्रया सह वज्रकायविषये वार्तालापं कृत्वा विवाहसन्नाहम् आरब्धवान्।

अनन्तरदिने राजसभायां मन्त्री भानुवर्मा उक्तवान्– "प्रभो, वज्रकायस्य विषये त्वरया निर्णयः स्वीकृतः इति भाति मम। वज्रकायः महापराक्रमी स्यात् नाम, तथापि ततोऽपि श्रेष्ठः अन्यः पराक्रमी राज्ये नास्ति इति न खलु? अतः क्षात्रविद्यायाः स्पर्धाम् आयोज्य पराक्रमनिर्णयः उचितः इति मम अभिप्रायः" इति।

सभ्येषु बहवः भानुवर्मणः अभिप्राये सहमतिं प्रदर्शितवन्तः। राजा अपि एतत् अङ्गीकृत्य स्पर्धावार्तां सडिण्डिमघोषं प्रसारितवान्।

स्पर्धादिने स्पर्धादर्शनार्थं जनाः सम्मिलितवन्तः। केचन वीराः अपि आगतवन्तः। किन्तु वज्रकायस्य आकृतिं दृष्ट्वा तेन कृतां राक्षसपराजयस्य वार्तां श्रुत्वा च तेषु कोऽपि खड्गोन्नयनसाहसं न प्रदर्शितवान्।

पञ्चदशनिमेषपर्यन्तं तत्र मौनं व्याप्तम् आसीत्। अत्रान्तरे चन्द्रवर्मा अकस्मात् उत्थाय वज्रकायस्य पुरतः खड्गं गृहीत्वा स्थितवान्। एतत् दृष्ट्वा राजा, राज्ञी, राजकुमारी च आश्चर्यचकिताः अभवन्।

वज्रकायः चन्द्रवर्माणं जुगुप्सया दृष्ट्वा

थूत्कृत्य स्वहस्ते स्थितेन खड्गेन तदीय खड्गं पातितवान्। वज्रकायस्य जयकारः सभायां प्रतिध्वनितः जातः।

वेतालः एवं कथां समाप्य अवदत्– "अत्र चन्द्रवर्मणः वज्रकायस्य च व्यवहारे मम कश्चन सन्देहः। चन्द्रवर्मा महाभीरुः। आत्मनः भीरत्वं निर्लज्जतया तेन स्वयम् उक्तम्। व्यवहारोऽपि तदीयः तादृशः एव। तादृशस्य मुखं द्रष्टुम् अपि वज्रकायः जुगुप्साम् अनुभवति। तादृशः सः चन्द्रवर्माणं जानन् अपि किमर्थं तदुपरि खड्गप्रहारं कृतवान्? किं वज्रकायेन प्रतिज्ञाभङ्गः न कृतः? राजकुमारीम् इच्छता तेन स्वप्रतिज्ञा विस्मृता किम्? वज्रकायस्य सामर्थ्यं जानन् अपि महाभीरुः चन्द्रवर्मा किमर्थं तस्य पुरतः खड्गम् आकृष्य स्थितवान्? राजकुमारीं परिणेतुम् इच्छति तस्मिन् किम् अकस्मात् पौरुषम् उत्पन्नम्? एतेषां सन्देहानां समाधानं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः एवम् उक्तवान्– "वज्रकायस्य चन्द्रवर्मणः वा व्यवहारे सन्देहकरं किमपि नास्ति। स्वस्वभावानुगुणं ताभ्यां व्यवहृतम्। वज्रकायः भीरून् दृष्ट्वा जुगुप्साम् अनुभवति इति तु सत्यम् एव, किन्तु सः राजकुटुम्बस्य गौरवं देशहितं च मनसि निधाय चन्द्रवर्माणं निवारितवान्। मुखम् अदृष्टं चेदेव जुगुप्सा इति नास्ति खलु? अतः जुगुप्सया चन्द्रवर्माणं निवारयता वज्रकायेन प्रतिज्ञाभङ्गः न कृतः एव। चन्द्रवर्मा तु कुटिलतन्त्रम् आश्रितवान्। 'भीरुं मां दृष्ट्वा वज्रकायः जुगुप्सया निर्गच्छेत्। तदा अहं पराक्रमी इति प्रमाणितं भविष्यति। राजकुमारी च मां परिणेष्यति' इति तस्य विचारः आसीत्। अतः एव सः तथा व्यवहृतवान्, न तु वीरावेशेन। वज्रकायः तदीयं विचारं विफलीकृतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।





# नैजाभिनयः

विनयपुरस्य राजा विजयशीलः। तस्य राज्ये रमानन्दनामकः नगरप्रमुखः आसीत्। सः यदा यदा अवकाशं प्राप्नोति तदा सर्वदा महाराजस्य प्रशंसां करोति। एवं सः राज्ञः प्रीतिं सम्पादितवान् आसीत्। अतः तस्य व्यवहारम् आक्षेप्तुं कस्यापि धैर्यं नास्ति।

रमानन्दः धनलोलुपः। राज्ञः यत् सापीप्यम् आसीत् तद्बलेन सः धनिकवणिग्भ्यः धनं बलात् स्वीकरोति। ये अपराधिनः अधिकम् उत्कोचं यच्छन्ति तान् बन्धविमुक्तान् करोति एषः।

रमानन्दस्य एतादृशं व्यवहारं परिशीलयन् एव अस्ति मन्त्री। मन्त्री तु प्रजाहितचिन्तकः सज्जनः। रमानन्दः राज्ञः प्रीतिपात्रम् इत्यतः सः तस्य दुर्व्यवहारं जानन् अपि प्रबलस्य साक्षिणः अभावात् मौनं स्थितवान्।

नवरात्रसन्दर्भे राजधान्यां नाटकप्रदर्शनानि प्रतिवर्षं प्रचलन्ति। एतस्मिन् वर्षे रमानन्दः अपि वेषधारी। सः नाटके कस्यचित् राज्ञः पात्रं निर्वहन् अभिनयकौशलेन महाराजं विजयशीलं सन्तोषितवान्।

नाटकसमाप्तेः अनन्तरं विजयशीलः रमानन्दं स्वसमीपम् आहूय पृष्टवान्– "भोः, रमानन्द! भवतः पात्रनिर्वहणम् अतीव सहजम् आसीत्। राजगाम्भीर्यादयः सम्यक् प्रदर्शिताः भवता। एतत् कथं शक्तम्?" इति।

तदा रमानन्दः उक्तवान्– "महाराज! निजजीवने यान् वयं समीपतः पश्यामः, येषां च आचारव्यवहारादिकं सम्यक् जानीमः तान् नाटके अनुकर्तुं शक्नुमः। अहं तु तदा तदा भवन्तं पश्यामि। भवान् तु मम आराध्यदेवः। अतः भवतः व्यवहारादिकं सम्यक् जानामि

अहम्। तेनैव कारणेन राजपात्रं यथावत् निर्वोढुं शक्तवान्" इति।

रमानन्दस्य वचनेन महाराजः नितरां सन्तुष्टः। सः स्वकण्ठे स्थितं हारं रमानन्दाय दत्तवान्।

मन्त्री महाराजस्य पार्श्वे एव आसीत्। सः एतत्सर्वं पश्यन् यथापूर्वं मौनं स्थितवान्।

अनन्तरदिने अपि नाटकप्रदर्शनं जातम्। तस्मिन् नाटके रमानन्दः कस्यचित् चोराग्रेसरस्य पात्रं निरूढवान्।

तदा अपि रमानन्दस्य पात्रनिर्वहणम् अपूर्वम् एव आसीत्। राजा अद्यापि अतीव सन्तुष्टः।

सः रमानन्दम् आहूय पृष्टवान्– "रमानन्द! अद्य भवान् चोराग्रेसरस्य पात्रम् अपि सम्यक् एव निरूढवान्। एतत् कथं शक्तम्?" इति।

एतस्य उत्तरं किं वक्तव्यम् इति अजानन् रमानन्दः इतस्ततः पश्यन् आसीत्।

तदा तत्रैव स्थितः मन्त्री 'रमानन्दस्य निजरूपं प्रकटीकर्तुम् एषः युक्तः समयः' इति आलोच्य महाराजम् उक्तवान्– "महाप्रभो! ह्यः राजपात्रस्य निर्वहणविषये रमानन्देन यत् उक्तं तत् भवान् स्मरति इति अहं भावयामि। यथा राजस्नेहः तथैव चोरस्नेहः अपि एतस्य निश्चयेन स्यात् एव। अन्यथा एषः चोराग्रेसरस्य पात्रं यथावत् निर्वोढुं सर्वथा न शक्नुयात्" इति।

तदा रमानन्दः स्वसमर्थनरूपेण किमपि वक्तुम् उद्युक्तः। किन्तु तावता मन्त्री तं निवार्य रमानन्दस्य व्यवहारं सङ्क्षेपेण निरूपितवान्।

एतत् श्रुत्वा राजा कोपेन रमानन्दं दृष्टवान्। रमानन्दः लज्जया शिरः अवनमय्य स्थितः आसीत्।

राजा भटान् आहूय रमानन्दस्य बन्धनम् आदिष्टवान्। अनन्तरदिने रमानन्दस्य व्यवहारविषये विचारणा प्रवृत्ता। तत्र तदीयाः सर्वे दुर्व्यवहाराः प्रमाणिताः जाताः। कुपितः राजा रमानन्दं कठोरं दण्डितवान्।



# चन्दमामानुबन्धः– ४
# ज्ञानभाण्डागारम्

एतन्मासीयम् ऐतिहासिकं व्यक्तित्वम्–



## श्री चैतन्यः

श्री चैतन्यः, गौराङ्गः इत्यपि प्रसिद्धः, फ्रेब्रवरीमासे १४८६ तमे वर्षे बङ्गालराज्ये नवद्वीपे जातः। सः महापण्डितः आसीत्। किन्तु चतुर्विंशतितमे वयसि गृहं परित्यज्य संन्यासं स्वीकृतवान्। सः वृन्दावनम्, अन्यानि नगराणि च गत्वा सहस्राधिकानां जनानां मनस्सु भगवतः कृष्णस्य विषये प्रीतिं भक्तिं च प्रेरितवान्। जीवनस्य अधिकं कालं जगन्नाथक्षेत्रे, पुरीनगरे यापितवान् सः। धार्मिके जातीये व भेदे तस्य विश्वासः न आसीत्। ये तस्य सम्पर्के आगताः ते सर्वे प्रभाविताः जाताः। तस्य प्रभावात् वधोद्यताः नम्राः जाताः, निन्दकाः च उपासकाः जाताः। ओरिस्सा देशीयः राजा प्रतापरुद्रदेवः एतस्य परमाभिमानी आसीत्।

वैष्णवसम्प्रदायस्य विष्णुसाक्षात्कारतत्त्वस्य वा नवचैतन्यदायकः सः स्वस्य अष्टचत्वारिंशत्तमे वयसि गूढम् अदृश्यतां गतवान्।

## सः कः स्यात्?

केचन बालकाः नद्यां स्नानं कुर्वन्तः तरन्तः च आसन्। तच्च ग्रीष्मकालीनं सुदिनम् आसीत्। जलं शीतलं, प्रवाहश्च आनन्ददायकः आसीत्।

तदा अकस्मात् जलोद्गमः दृष्टः। बालकाः नद्यां मकरस्य पुच्छं दृष्टवन्तः। अनुक्षणं ते एकस्य बालकस्य आक्रन्दनं श्रुतवन्तः– "मकरः मम पादं गृहीतवान् अस्ति" इति।

नदीतीरे स्थितौ बालकौ तस्य बालकस्य मातुः समीपं गत्वा प्रवृत्तं निवेदितवन्तः। भीता माता धावन्ती नदीतीरम् आगतवती।

"अम्ब! मरणात् मम रक्षणार्थम् एकः एव उपायः यत् अहं देवाय अर्पणीयः। भवती माम् अर्पयिष्यति वा?" इति पृष्टवान् बालकः।

"पुत्र! भवन्तं देवाय अर्पयितुम् अहं सिद्धा। देवः भवन्तं रक्षतु" इति माता उच्चैः उक्तवती।

मकरः बालकं त्यक्त्वा तरन् कुत्रापि गतवान्।

वदन्तु, सः बालकः कः स्यात्?

(उत्तरम् अष्टमे पृष्ठे)

# निगूढं पात्रम्

**एवं करोतु –**

विशालं पात्रम् (Can) एकं स्वीकरोतु, यस्य च आवरणं दृढं तिष्ठेत्। पात्रस्य अधोभागस्य, आवरणस्य च मध्यं परितः रन्ध्रद्वयं करोतु। अनन्तरम् एकं दीर्घं दृढं च रब्बर्बन्धं स्वीकृत्य तत् कर्तयतु, येन तत् दीर्घसूत्रवत् भवेत्। ततः पात्रस्य अधोभागे स्थितयोः रन्ध्रयोः, आवरणस्य रन्ध्रयोः च मध्ये तत् योजयित्वा अन्तद्वयं ग्रन्थिरूपेण योजयतु।

ग्रन्थिकरणतः पूर्वं रन्ध्रयुतस्य लोहवस्तुनः (Nut or Fishing sinker) अन्तः रब्बर्बन्धस्य एकम् अन्तं नयतु। तदा पात्रस्य अन्तः एकस्मिन् पार्श्वे तत् लोहवस्तु लम्बमानं





तिष्ठति। (यथा चित्रे प्रदर्शितम्) यदा पात्रं लुठत् भवति तदा लोहवस्तु आकृष्टं न स्यात्। अनन्तरम् आवरणेन पात्रस्य पिधानं करोतु। इदानीं पात्रस्य अन्तः रब्बर्बन्धस्य एकस्मिन् पार्श्वे लोहवस्तु लम्बमानम् अस्ति। पात्रं भूमौ मन्दं लुण्ठयतु।

**किं भवति, किमर्थं च भवति?**

पात्रं किञ्चिद्दूरं लुठत् गच्छति, तिष्ठति, पुनः लुठत् प्रत्यागच्छति। पात्रे एकस्मिन् पार्श्वे स्थितं भारयुतं लोहवस्तु अपरं पार्श्वम् आवृत्य तिष्ठतीति कारणतः एवं गमनं प्रत्यागमनं च भवति। अग्रे गत्वा यदा तिष्ठति तदा भारयुतं वस्तु अधोमुखं शक्तिं प्रेरयति, भारः च प्रत्यावर्तते। अतः पात्रं लुठत् प्रत्यागच्छति।

एतस्य निगूढपात्रस्य चर्यां प्रदर्शयन् भवान् अन्तः किं प्रवर्तते इति अजानत् मित्रं आश्चर्यचकितं कर्तुं शक्नोति। मित्रस्य पुरतः कुतो वा एतत् कृत्वा न प्रदर्शनीयम्?

लोहवस्तु अपरं रब्बर्बन्धभागम् आवृत्य यथा तिष्ठेत् तथा हस्तेन पुनः पुनः पात्रस्य आवर्तनं कृत्वा पात्रम् अधः स्थापयतु। तदा पात्रं भवत्तः दूरे गच्छति किम्? परीक्ष्य जानातु तावत्।

अल्पभारयुतं वस्तु, वर्तुलाकारकं पात्रं, ओट्धान्यचूर्णस्य पेटिका (Oatmeal-box) इत्यादयः उपयुक्ताः चेत् किम् उत्तमः परिणामः लभ्यते? आं खलु? यतः यथा पात्रं लुठेत् तथा कर्तुम् अल्पभारयुतं वस्तु आवश्यकम्।



# विश्ववैचित्र्यम्

## झूस्प्रतिमा

क्रि.पू. ५ शतकं ग्रीसदेशस्य स्वर्णकालः इति गण्यते, यदा च श्रेष्ठः राजनीतिकुशलः पेराक्लस् राज्यशासनं करोति स्म।

ग्रीस्देशस्य श्रेष्ठः शिल्पी तस्मिन् एव काले आसीत्। तस्य च नाम फिडियास् इति। ४० द्वादशाङ्गुलोन्नता स्वर्णेन दन्तेन च निर्मिता अथेनादेवतायाः मूर्तिः एव तस्य प्रथमम् अत्युत्कृष्टं शिल्पम्। एथेन्स्नगरस्य मध्ये पर्वतस्य उपरि स्थितं पार्थेनान् देवालयम् अलङ्करोति स्म एषा मूर्तिः।

ओलम्पियादेवालयस्य अलङ्करणार्थं स्वर्णेन दन्तेन च निर्मिता झूस्मूर्तिः फिडियास् महोदयस्य अपरा अत्युत्कृष्टा कृतिः। सा दृढकायस्य पुरुषस्य अपेक्षया अपि सप्तगुणितम् उन्नता आसीत्। तस्याः मूर्तेः रूपं तु चित्ताकर्षकम् आसीत्। प्राचीनाः तां मूर्तिं सप्तसु अद्भुतेषु अन्यतमं भावयन्ति स्म।



अपूर्वाः ऐतिहासिकघटनाः

# कार्तेज्नगरस्य विनाशः

क्रिस्तात् त्रिशतवर्षेभ्यः पूर्वं सिरियादेशस्य समुद्रतीरे फिनोषियन्-वंशीयाः निवसन्ति स्म। तैः शोभायमानम् एकं नगरं निर्मितं, यस्य च नाम कार्तेज् इति। एतन्नगरं देशविदेशीयवाणिज्यार्थं सुप्रसिद्धम् आसीत्।

एतन्नगरस्य अभिमुखं, किन्तु दूरे, रोमनगरं प्रवृद्धम्। रोमनगरस्य कार्तेज्-नगरस्य च मध्ये वैरम् उत्पन्नम्। अचिरात् एव तयोः मध्ये युद्धपरम्परा आरब्धा, या च इतिहासे प्युनिक्युद्धम् इति उल्लिखिता।

प्रथमे प्युनिक्युद्धे कार्तेज्नगरस्य पराजयः जातः। किन्तु अल्पे एव काले तत् नगरं पुनश्चेतनं प्राप्नोत्। हेन्निबाल्नामकस्य नायकत्वे सेना आक्रमणार्थं गता। हेन्निबाल् रोमनगरं पराजित्य नवनवतिसहस्रं स्त्रीपुरुषान् दारुणतया मारयन् रक्तसागरे मज्जितवान्। किञ्चित्कालं यावत् सः मरणस्य प्रतिरूपम् इव सर्वाधिकारिरूपेण तत्रैव स्थितवान्।

किञ्चित्कालाभ्यन्तरे कार्तेज्नगरीयाः तस्य जीवनार्थम् अपेक्षितानां पदार्थानां धनस्य च प्रेषणं स्थगितवन्तः। 'मां महापुरुषं मन्यमानाः पुरस्कुर्युः' इति



आशया सः स्वनगरं प्रत्यागतवान्। किन्तु केनचित् कारणेन तस्य निरीक्षा सफला न जाता। सः निर्वेदेन आत्महत्यया जीवनं समापितवान्।

रोम्‌नगरीयाः स्वनगरस्य पुनर्निर्माणे उद्युक्ताः जाताः। 'सिपियो' नामकः तेषां नायकः जातः। सः सेनया सह गत्वा कार्तेज़्नगरम् आक्रान्तवान्। कार्तेज़्नगरं बाह्यसम्पर्कात् सर्वथा च्युतं जातम्। नागरिकाः आहारं विना कानिचन दिनानि यापितवन्तः। सिपियो नगरं प्रविश्य नगरस्थेषु सप्तलक्षजनेषु सार्धषड्-लक्षाधिकान् जनान् निर्दयतया मारितवान्। अवशिष्टान् जनान् सः दासरूपेण रोम्‌नगरं नीतवान्।

रोम्‌जनाः कार्तेज़्नगरं यत् नाशितवन्तः तत् तावत् घोरम् आसीत् यत् तत्र एकं भवनम्, एकः स्तम्भः, एका भित्तिः वा न अवशिष्टा। नगरस्य अवशेषेषु ते हलेन कृष्टवन्तः।

इतिहासे एषः एव महता परिमाणेन मानवैः कृतः अतिघोरः प्रथमः विनाशः। एकः दुराग्रहः अन्यस्य हेतुः भवति इत्यस्य एतत् प्रत्यक्षम् उदाहरणम्।



## भारतीये इतिहासे कटाक्षपातः



१. 'कर्णाटकम्' इत्यस्य अर्थः कः?
२. भारतात् अन्यस्य कस्य देशस्य राजधान्याः नाम 'अयोध्या' इति?
३. किं नगरं दुर्गं परितः निर्मितम् अस्ति?
   (अ) तस्य दुर्गस्य नाम किम्?
   (आ) एतस्य निर्माणं कः कदा आरब्धवान्?
   (इ) तं प्रदेशं तस्मै कः दत्तवान्?
४. आंग्लेयैः कलकत्ताप्रदेशे निर्मितस्य दुर्गस्य नाम किम्? एतच्च कदा निर्मितम्?
५. कः मुघलचक्रवर्ती स्वसेनाधिपतिना बन्धने स्थापितः?
   (अ) सः सेनाधिपतिः कः?
   (आ) राजा कथं बन्धविमुक्तः जातः?
६. कस्मिन् क्रिस्ताब्दे विक्रमशाकः आरब्धः?
७. कस्मिंश्च क्रिस्ताब्दे (शालिवाहन)शकवर्षम् आरब्धम्?
८. गुप्तशकवर्षं कस्मिन् क्रिस्ताब्दे आरब्धम्?

(उत्तराणि अष्टमे पृष्ठे)

## वैज्ञानिकान्वेषणस्य संशोधनस्य वस्तुस्थितेः च प्रपञ्चः

१. युरोपदेशीयः कः चीनादेशस्य चक्रवर्तिनः आस्थाने अत्युन्नतं पदम् अलङ्कृतवान्?
   (अ) सः चक्रवर्ती कः?
   (आ) तस्य युरोपदेशीयस्य साहसकृतिः कथं प्रकटिता जाता?
   (इ) तेन सह स्थितौ अन्यौ युरोपदेशीयौ कौ?
२. सिन्धु-ब्रहमपुत्रयोः सत्लजूनद्याः च मूलं कः युरोपीयजनः अन्विष्टवान्?
३. कः जीवी कागदसदृशं वस्तु मानवात् सहस्राधिकवर्षेभ्यः पूर्वम् एव निर्मितवान्?
४. कः जन्तुः स्वकीयम् उदरं बहिर्मुखं कर्तुं शक्नोति?
५. घनीकृतजलात् उत्पन्नं हिमं जलमये चषके द्रवीकुर्मः चेत् किं जलस्तरः वर्धते?
६. विमानस्य प्रथमं प्रतिरूपं (Model) कः निर्मितवान्?
७. चन्द्रस्य प्रथमं छायाचित्रं (Photograph) कदा स्वीकृतम्?

(उत्तराणि अष्टमे पृष्ठे)




१. राज्ञः विक्रमादित्यस्य नव रत्नानि (नव पण्डिताः) कानि?

२. नायन्माराः नाम के ते?

३. आळ्वाराः नाम के ते?

४. भारतस्य प्राचीनतमाः ग्रन्थाः के?

(अ) ते कति सन्ति?
(आ) तान् कः विरचितवान्?
(इ) तान् कः सङ्गृहीतवान्?
(ई) तेषाम् अपरं नाम किम्?
(उ) तेषां तथा नाम किमर्थम्?

५. वेदानाम् अनन्तरं के ग्रन्थाः आगताः?

(अ) ते च कति?
(आ) तेषु प्रधानभूताः कति?

(उत्तराणि अष्टमे पृष्ठे)

## जानीम एकं शब्दं प्रमुखासु भारतीयभाषासु

**अस्सामी**-सन्धिया, **बेंगाली**-सन्ध्या, **इंग्लीष्**-इवनिंग्, **गुजराती**-साञ्ज्, **हिन्दी**–शाम, **कन्नड**-सञ्जे, **काश्मीरी**-शाम, **मलयालम्**-वैगुन्नेरम्, **मराठी**-सन्ध्याकाल, **ओरिया**-सन्ध्या, **पञ्जाबी**-लोटबेला, **संस्कृतम्**-सन्ध्या/ सायङ्कालः, **सिन्धि**-शाम, .**तमिळ**-माळै, **तेलुगु**-सायङ्कालम्, **उर्दु**-शाम।

# अपि भवान् विश्वसिति?

* यत् जूलियस् सीसर् रोमनृचक्रवर्ती आसीत् इति?
* यत् आकाशः नीलः इति?
* यत् हिन्दवः बहुसङ्ख्यया भारते केवलं सन्ति इति?

# न तथा

* यद्यपि तस्य इच्छा आसीत्, किन्तु सः चक्रवर्तिपदवीं प्राप्तुं न शक्तवान्।
* आकाशस्य कोऽपि वर्णः नास्ति। भूमेः वातावरणद्वारा सूर्यप्रकाशः यत् प्रसरति तस्य परिणामतः आकाशः नीलः दृश्यते।
* न, नेपालदेशे अपि ते अधिकसङ्ख्यया सन्ति।

# उत्तराणि

## सः कः स्यात्?

आदिशङ्कराचार्यः।

## इतिहासः

१. 'करुनाड्'शब्दतः कर्णाटकशब्दः निष्पन्नः। तस्य अर्थः तु – 'उन्नतः प्रदेशः' इति।
२. थायुलेण्ड्देशस्य।
३. आधुनिकं मद्रासुनगरम्।
(अ) सेण्ट् जार्ज्दुर्गम्।
(आ) ईस्ट् इण्डिया संस्थायाः फ्रान्सिस् डेय्।
१६४० तमे वर्षे।
(इ) चन्द्रगिरिराजः।
४. विलियमृदुर्गम्, १६९६-१७१५ मध्ये निर्मितम्।
५. जहांगीर्महाराजः।
(अ) महबत् खान्।
(आ) नूर्जहान् राज्ञयाः कौशलतः।
६. क्रि.पू. ५८ तमवर्षात्।
७. क्रि.श. ७८ तमवर्षात्।
८. क्रि.श. ३१९-२० तमवर्षात्।

## विज्ञानादयः

१. मैक्रो पोलो।
(अ) कुब्ला खान्।
(आ) इटलीं प्रति आगमनसमये मैक्रो पोलो युद्धे भागं गृहीतवान्, बन्दी जातः च। कारागारे सः स्वस्य चरित्रं निवेदितवान्।
(इ) तस्य पिता निकोलो पोलो, पितृव्यः माफिया पोलो च।
२. स्वान् अण्डेर्स् हेडिन्। (१८६५-१९५२)।
३. वरटा। (Wasps)
४. नक्षत्रमीनः। (Star-fish)
५. न।
६. लियोनार्डो ड विञ्चि।
७. १८४१ तमे संवत्सरे।

## साहित्यं पुराणं च

१. धन्वन्तरिः, क्षपणकः, अमरसिंहः, शङ्कुः, वेतालभट्टः, घटकर्परः, कालिदासः, वराहमिहिरः, वररुचिः च।
२: प्राचीनतमिळनाड्प्रदेशस्य शैवमतानुयायिनः सिद्धाः।
३. प्राचीनतमिळनाड्प्रदेशस्य वैष्णवतानुयायिनः सिद्धाः।
४. वेदाः।
(अ) चत्वारः।
(आ) प्राचीनाः केचन ऋषिमुनयः
(इ) वेदव्यासः।
(ई) श्रुतयः इति।
(उ) यतः एते वेदाः कुत्रापि लिखिताः न आसन्। पारम्पर्यक्रमेण श्रुत्वा पण्डितैः एते स्मृताः। (श्रुतिः नाम – या श्रूयते सा)
५. उपनिषदः।
(अ) अष्टोत्तरशतम्।
(आ) षोडश। (तत्रापि दश)



काव्यकथा -

# मणिमञ्जीरम्-४

पूम्पुहारनगरस्य वणिक् आसीत् कोवलन्। सः कण्णगीं परित्यज्य नर्तक्याः माधव्याः साहचर्ये कञ्चन कालं यापितवान्। ततः विवेकं प्राप्य पत्नीसमीपम् आगतवान्। अनन्तरं कण्णगी कोवलन् च जीवनमार्गम् अन्विष्यन्तौ मधुरैनगरम् आगतवन्तौ।

तत्र कोवलन् पत्न्या दत्तं मञ्जीरं विक्रीय प्राप्तेन धनेन वाणिज्यम् आरब्धुम् इष्टवान्। मञ्जीरं नीत्वा राजास्थानीयाय स्वर्णकाराय प्रदर्शितवान्। कोवलनस्य हस्ते स्थितं तत् अमूल्यं मञ्जीरं दृष्ट्वा सः स्वर्णकारः आश्चर्यचकितः। तत्र कारणम् अपि आसीत् एव।





तेषु एव दिनेषु राज्ञ्याः मञ्जीरं चोरितम् आसीत्। स्वर्णकारः एव चोरितवान् स्यात् इति बहूनाम् अभिप्रायः आसीत्। कोवलनस्य हस्ते स्थितं तत् अमूल्यं मञ्जीरं दृष्ट्वा सः स्वर्णकारः, कोवलनं तत्रैव किञ्चित्कालं स्थातुं सूचयित्वा राज्ञः समीपं गतवान्। 'अहं चोरं प्रदर्शयामि ति उक्तवान् च।



राजा स्वर्णकारस्य वचने विश्वसितवान्। सः पूर्वापरम् अनालोच्य भटान् आहूय 'मञ्जीरचोरं बध्द्वा शूलम् आरोपयन्तु' इति आदिष्टवान्।

भटाः स्वर्णकारेण सह गत्वा कोवलनं बन्धने स्थापितवन्तः। तस्य हस्ते अमूल्यं मञ्जीरं तु आसीत् एव। अतः ते कोवलनं नीत्वा राजाज्ञानुसारं शूलम् आरोपितवन्तः।





धनेन सह आगमिष्यमाणस्य पत्युः प्रतीक्षायाम् आसीत् कण्णगी। सा पत्युः मरणवार्तां प्राप्य दिग्भ्रान्ता। "किं देवः नास्ति प्रपञ्चे? किं न्यायः मृतः वा अस्मिन् नगरे?" इति वदन्ती रुदती आक्रोशन्ती च कण्णगी कोपावेशेन नगरमार्गम आगतवती।

तस्याः कोपावेशम् आक्रोशनं च दृष्ट्वा तत्र बहवः जनाः सम्मिलिताः। तस्याः तादृशेन व्यवहारेण तैः ज्ञातं यत् एतस्याः पत्युः विषये महाराजेन अविवेकेन व्यवहृतम् इति। एतत् ज्ञात्वा ते अपि दिग्भ्रान्ताः।





कण्णगी राजसभां प्रविश्य स्वसमीपे स्थितम् अपरं मञ्जीरं राज्ञे प्रदर्श्य– "निरपराधिनं मम पतिम् अविचार्य शूलम् आरोपितवान् खलु भवान्? पश्यतु, मम मञ्जीरे माणिक्यानि सन्ति" इति उक्त्वा रुदती एव मञ्जीरं भूमौ बलात् पातितवती। तदा मञ्जीरं भग्नं, माणिक्यानि तत्र विकीर्णानि। राज्ञ्याः मञ्जीरे तु मुक्ताः भवन्ति। एतत् दृश्यं दृष्टवतः महाराजस्य हृदयस्तम्भनं जातम्। सः दिवङ्गतः।

राज्ञः मरणं दृष्ट्वा राज्ञी अपि मूर्च्छिता जाता। निरपराधी दण्डितः इति परितापेन राजा मृतः चेत् पतिवियोगात् मूर्च्छितायाः राज्ञ्याः प्राणाः अपि निर्गताः।





एतावता अपि कण्णग्याः कोपः न शान्तः। आवेशवशात् सा रुदती एव त्रिवारं नगरप्रदक्षिणं कृतवती। अधर्माचरणं कुर्वतः राज्ञः नगरं दुष्टानां निलयः इति सा भावितवती। अतः 'एतत् नगरं भस्मसाद्भवतु' इति शापं दत्तवती सा।

नगरे सर्वत्र अकस्मात् अग्निः उद्गतः। 'सज्जनान्, स्त्रियः, वृद्धान्, बालान्, विकलाङ्गान् च रक्षतु' इति अग्निं प्रार्थितवती कण्णगी। अतः तादृशाः अग्नितः रक्षिताः जाताः।





दिव्यरथम् आरुह्य स्वर्गारोहणं कुर्वन्तौ कण्णगीकोवलनौ कैश्चित् भाग्यशालिभिः दृष्टौ इति श्रूयते। कण्णगीं पतिव्रता इति, देवता इति च जनाः पूजयन्ति। संयमस्य पातिव्रत्यस्य च प्रतीकरूपेण सा लोके विराजमाना अस्ति।

—(समाप्तम्)




# आत्मप्रशंसाप्रवृत्तिः

विद्याधरपुरस्य वैशालीनगरस्य च मध्ये किञ्चन अरण्यम् आसीत्। अरण्यमध्ये कश्चन मार्गः। मार्गपार्श्वे विशालः कश्चन वटवृक्षः। तस्मिन् वटवृक्षे कुचेष्टापरौ पिशाचौ निवसतः।

तयोः पिशाचयोः अन्यतरः वृद्धः। अपरः युवकसदृशः। वृद्धः पिशाचः मार्गे गच्छतां जनानां व्यवहारं दृष्ट्वा तेषां दौर्बल्यं जानाति स्म। तत् दौर्बल्यं तरुणं पिशाचं वदति सः। तरुणः पिशाचः तेषां दौर्बल्यस्य अनुगुणम् आकर्षणं सृष्ट्वा तेषु आशाम् उत्पाद्य, पुनराशाभङ्गं कुर्वन् क्रीडति स्म।

कदाचित् तौ पिशाचौ वटवृक्षस्य शाखायाम् उपविश्य जल्पने मग्नौ आस्ताम्। 'महत् दौर्बल्यं किम्?' इति तयोः चर्चा आरब्धा। महत्याः चर्चायाः अनन्तरम् अपि तयोः अभिप्राये ऐकमत्यं न आगतम्। तत्समये कश्चन तेन अरण्यमार्गेण आगच्छन् आसीत्।

वृद्धः पिशाचः तं परीक्षादृष्ट्या अपश्यत्। किन्तु तस्य पुरुषस्य दौर्बल्यं किमिति न ज्ञातं तेन। यतः तस्य पुरुषस्य मुखे परमगम्भीरता व्याप्ता आसीत्।

वृद्धपिशाचः तस्य दौर्बल्यं ज्ञातुं न शक्नोति इति ज्ञात्वा तरुणः पिशाचः धनग्रन्थिं सृष्ट्वा अदृश्यरूपेण गत्वा तस्य पुरुषस्य मार्गे कुत्रचित् अपातयत्।

सः पुरुषः तं धनस्यूतम् अपश्यत्। किन्तु तम् उन्नेतुं प्रयत्नं कमपि अकुर्वन् 'अहो, कस्यापि मन्दभाग्यस्य स्यूतः अत्र पतितः अस्ति खलु?' इति आत्मगतं वदन् अग्रे गतवान्।

एतत् दृष्टवतोः तयोः पिशाचयोः महती निराशा। अद्यावधि तौ धनस्यूतं दृष्ट्वा




आश्चर्यं प्रकटयतः जनान् दृष्टवन्तौ आस्ताम्। तादृशैः जनैः इतस्ततः पश्यद्भिः धनं स्वस्यूते गोपितं दृष्टम् आसीत् ताभ्याम्। तादृशाः जनाः कस्यापि अनुपस्थितिं दृष्ट्वा एकान्ते कुत्रचित् महता सन्तोषेण स्यूतम् उद्घाटयन्ति। किन्तु तत्र स्यूते वृश्चिकान्, तैलपान्, कर्कटान् वा दृष्ट्वा भीत्या दिग्भ्रान्ताः भवन्ति। तेषां भीतिं कष्टं च दृष्ट्वा एतौ पिशाचौ सन्तोषम् अनुभवतः। अट्टहासपूर्वकं हसतः च।

धनस्यूतं दृष्ट्वा अपि अनासक्तिं प्रदर्श्य गच्छन्तं पश्यतोः पिशाचयोः कोपः आगतः। केनापि उपायेन तस्य मनश्चाञ्चल्यं सम्पादनीयम् इति तौ निश्चितवन्तौ। तरुणः पिशाचः वृक्षात् अवतीर्य सुन्दर्याः रूपं धृत्वा तस्य पुरुषस्य सम्मुखम् आगत्य अतिष्ठत्।

सः गम्भीरः पुरुषः तां दृष्ट्वा किञ्चित् अपसृत्य ताम् अतिक्रम्य अग्रे अगच्छत्। तदा सा सुन्दरी पादे कण्टकं लग्नम् इव अभिनयन्ती 'हा हन्त!' इति वदन्ती अपतत्।

तदा किञ्चिदग्रे गतः सः गम्भीरः पुरुषः प्रत्यागत्य सुन्दर्याः युवत्याः पादे लग्नं कण्टकं जागरूकतया निष्कासितवान्।

सा तरुणी कृतज्ञताभावम् अनुरागं च प्रकटयन्ती तस्य हस्तं गृहीतवती। महता प्रेम्णा– "अहम् अनाथा अस्मि। भवति अनुरागवती चापि अस्मि। मां परिणयतु। श्रद्धया भवतः सेवां करिष्यामि" इति प्रार्थितवती।

"कण्टकस्य अपनयनेन भवती मयि अनुरागवती जाता। एवं तर्हि कदाचित् कश्चित् इतोऽपि अधिकम् उपकारं करोति चेत् तम् एव अनुसरेत्। एषः न श्लाघनीयः व्यवहारः। एतादृशः व्यवहारः मह्यं सर्वथा न रोचते" इति उक्त्वा अग्रे गतवान् सः पुरुषः।

निरुत्साहेन प्रत्यागतवन्तं तं पिशाचं दृष्ट्वा वृद्धः पिशाचः– "एतावान् दृढः वा सः? पश्यतु, अहं तं क्रीडयिष्यामि" इति उक्त्वा ततः निर्गतः।

मार्गे गच्छतः पुरुषस्य पार्श्वे समीपस्थात् गुल्मतः– "हा हन्त! महती पिपासा!" इति वेदनापूर्णः ध्वनिः श्रुतः।

गम्भीरः पुरुषः गमनं स्थगितवान्। ध्वनिम् अनुसृत्य गत्वा दृष्टवान्। तत्र महाराजस्य वेषेण स्थितः कश्चित् पतितः आसीत्। सः मृगयार्थम् आगतः इव दृश्यते स्म। तस्य शरीरे बहवः व्रणाः दृश्यन्ते।

तं दृष्ट्वा सः गम्भीरः पुरुषः स्यूतात् जलपात्रं निष्कास्य आवरणम् अपसार्य तस्य मुखे जलं पातितवान्।

किञ्चित्कालानन्तरं सः राजा चैतन्यं प्राप्य अवदत्– "भोः महानुभाव! भवान् मम प्राणान् रक्षितवान्। अहम् एतस्य देशस्य राजा अस्मि। मृगयार्थम् एतत् अरण्यम् आगतः एवं व्रणितः जातः। भवता तु महान् उपकारः कृतः। भवान् मम राजधानीम् आगच्छतु। भवन्तम् उन्नते पदे नियोक्ष्यामि" इति।

तदा सः पुरुषः– "यः पिपासितः भवति तस्मै जलदानं मम धर्मः। तदर्थं कस्यापि प्रतिफलस्य निरीक्षणं न करोमि अहम्" इति उक्त्वा अग्रे प्रस्थितवान्।

तस्य गमनं दृष्ट्वा तरुणः पिशाचः राजवेषेण स्थितस्य वृद्धपिशाचस्य समीपं गत्वा अवदत्– "एषः कश्चन विलक्षणः पुरुषः। तस्य दौर्बल्यं किमपि प्रकटितं न भवति। किन्तु दौर्बल्यरहितः जनः लोके कोऽपि न भवति इति मम अभिप्रायः। अतः आवां मनुष्यरूपेण तम् अनुसराव। तस्य दौर्बल्यं किम् इति जानीव" इति।




अनन्तरं पितापुत्रयोः वेषं धृत्वा तौ प्रस्थितवन्तौ। सः पुरुषः वृक्षस्य अधः विश्रान्त्यर्थम् उपविष्टवान् आसीत्। एतौ पिशाचौ अपि श्रान्तिम् अभिनयन्तौ श्रमनिवारणार्थं तस्यैव वृक्षस्य अधः उपविष्टवन्तौ। तेन सह वार्तालापम् आरब्धवन्तौ।

वार्तालापसन्दर्भे सः पुरुषः मार्गे आत्मना धनस्यूतः यत् लब्धः, सुन्दरी आगत्य अनुरागेण यत् उक्तवती, महाराजः पिपासानिवारणं प्राप्य पदवीदानं यत् प्रतिज्ञातवान् तत् सर्वं विस्तरेण निवेदितवान्। पिशाचौ एतत् सर्वं जानीतः एव। तथापि अजानन्तौ इव आश्चर्यं प्रकटीकृतवन्तौ।

एतत्सर्वं श्रावयित्वा सः पुरुषः साभिमानं

पिशाचौ उक्तवान्– "इदानीम् उच्यताम्। धनदाहरहितः, सौन्दर्यव्यामोहरहितः, कीर्तिकामनारहितः च मादृशः अन्यःकोऽपि भवद्भ्यां दृष्टः वा लोके? यदि दृष्टं स्यात् तर्हि उच्यताम्" इति।

"न दृष्टः तादृशः, सर्वथा न दृष्टः" इति उक्तवन्तौ तौ पिशाचौ।

एतत् श्रुत्वा सः पुरुषः सन्तृप्तः सन् स्वबाल्यस्य अनुभवान् निरूपयितुम् आरब्धवान्। आत्मनः सद्गुणान्, तेषां सम्पादनार्थम् आत्मना कृतान् प्रयत्नान् च महता विस्तरेण निवेदितवान्।

तौ पिशाचौ सुदीर्घकालं यावत् सहनया तस्य कथनं श्रुतवन्तौ। किन्तु तस्य पुरुषस्य आत्मप्रशंसायाः समाप्तिः एव न भवति। पिशाचयोः सहनशक्तिः समाप्ता। तौ तस्य निरन्तरकथनपीडां सोढुम् अशक्तौ ततः अदृश्यतां गत्वा स्ववसतिस्थानं वटवृक्षं प्राप्तवन्तौ।

"हा हन्त! कीदृशः पुरुषः सः! महतीं शिरोवेदनां जनितवान् सः" इति अवदत् सः तरुणः पिशाचः।

तदा सः वृद्धः पिशाचः हसन् अवदत्– "शिरोवेदना आगता स्यात् नाम। किन्तु एतावता तस्य दौर्बल्यं किमिति ज्ञातम्" इति।

किन्तु तरुणः पिशाचः एतस्य आशयं स्पष्टम् अजानन् वृद्धपिशाचस्य मुखम् अपश्यत्। तदा वृद्धः पिशाचः सुखेन उपविशन् उक्तवान्– "पश्यतु भोः, अतिमहत् दौर्बल्यं नाम आत्मप्रशंसा एव। कस्यचित् पुरुषस्य दुर्गुणः कोऽपि न भवेत् नाम। किन्तु यदि तस्य आत्मप्रशंसाप्रवृत्तिः स्यात् तर्हि तदीयाः सर्वे सुगुणाः कान्तिहीनाः भवन्ति। सुगुणाः सदापि अन्यैः प्रशंसनीयाः, न तु आत्मना। येषाम् आत्मप्रशंसाप्रवृत्तिः भवति ते समाजे अल्पतां प्राप्नुवन्ति। सः महापुरुषः तु जनपीडकौ आवाम् एव सम्यक् पीडितवान्" इति।

"आत्मप्रशंसा नाम महान् दुर्गुणः!" इति उद्गारं प्रकटितवान् सः तरुणः पिशाचः।





# कृष्णावतारः

कदाचित् कृष्णः रात्रौ स्वपितुः गृहे आसीत्। तत्समये तस्य मनसि कश्चन विचारः आगतः। 'अस्मदीयानां वसत्यर्थं तु वैभवोपेतं द्वारावतीनगरं सिद्धम् अस्ति। किन्तु तत्रत्यानां जीवनं सुखमयं यथा स्यात् तथा धनव्यवस्था तु न जाता। जनानां तृप्त्यर्थं सुखार्थं च धनम् अत्यावश्यकम्' इति आलोचितवान् कृष्णः। तत्समये अकस्मात् शङ्खनिधिः तस्य स्मरणे आगतः। सः शङ्खनिधिं स्मृतवान्।

शङ्खनिधिः प्रत्यक्षीभूय कृष्णस्य पुरतः स्थित्वा नमस्कृत्य– "अहम् उपस्थितः अस्मि। मम स्मरणस्य किं कारणम्? मया किं करणीयम् इति आदिशतु" इति उक्तवान्।

"धनेन हीनः जीवच्छवः इति गण्यते लोके। मदीयेषु जनेषु दीनान् अनाथान् आर्तान् च द्रष्टुम् अहं न इच्छामि। कस्यापि कापि न्यूनता यथा न स्यात् तथा द्वारकायाः सर्वेषु गृहेषु सम्पत्तिं स्थापयतु। एतदर्थम् एव अहं भवन्तं स्मृतवान्" इति सूचितवान् कृष्णः।

"यथाज्ञापयति भवान्" इति उक्त्वा शङ्खनिधिः ततः प्रस्थितवान्। अन्यैः अष्टभिः निधिभिः सह सः प्रत्यागतवान्। तेषां सर्वेषां द्वारकाप्रवेशेन सर्वाणि गृहाणि नवनिधिभिः पूर्णानि। द्वारकायां दारिद्र्यं सर्वथा लुप्तम्।

कृष्णः पुनः कदाचित् वायुं स्मृतवान्। वायुः प्रत्यक्षीभूय कृष्णस्य पुरतः स्थितवान्।

"वायुदेव! बलेन भवत्समानः कोऽपि नास्ति लोके। भवता कश्चन उपकारः



करणीयः। इन्द्राय विश्वकर्मा सुधर्मानामकं सभामण्डपं निर्माय अर्पितवान्। यादवानां निमित्तम् अपि तादृशः कश्चन सभामण्डपः आवश्यकः। अतः भवान् इन्द्रसमीपं गत्वा मम आदेशम् उक्त्वा, तस्य अनुमतिं सम्पाद्य तत् सभामन्दिरम् आनीय द्वारकायां स्थापयतु" इति उक्तवान् कृष्णः।

वायुदेवः एतत् अङ्गीकृत्य देवलोकं गतवान्। देवसभायाम् उपविष्टवन्तम् इन्द्रं कृष्णस्य आदेशं श्रावितवान्। अनन्तरम् इन्द्रस्य देवानां च अनुमतिं प्राप्य सुधर्मानामकं सभामण्डपं नीत्वा द्वारकायां स्थापितवान्। एतेन भूलोकः स्वर्गसमः जातः।

एवं श्रीकृष्णः अन्यान्यलोकेषु स्थितानि अत्युत्कृष्टानि वस्तूनि आनीय द्वारकायां स्थापितवान्। कृष्णः सर्वम् अपि परिशीलयन् अपेक्षितसौलभ्यार्थं व्यवस्थाम् उपकल्पयति स्म।

प्रमुखेषु स्थानेषु तत्स्थानोचिताः दक्षाः नियुक्ताः आसन्। उग्रसेनः राजा आसीत्। काश्यपः नाम ब्राह्मणः पुरोहितः आसीत्। विकद्रुश्च मन्त्री। विविधेषु प्रमुखेषु राजकार्येषु दश मेधाविनः यादवप्रमुखाः वृद्धाः नियुक्ताः आसन्। दारुकः कृष्णस्य सारथिः। अस्त्रविद्यया द्रोणाचार्यसमः सात्यकिः सेनापतिस्थाने नियुक्तः आसीत्। द्वारकासदृशं राज्यं भूलोके अन्यत् न आसीत्। भोलोकम् आगता अमरावती इव दृश्यते स्म द्वारका। द्वारकायाः वैभवं तु वर्णनातीतम्।

रैवतस्य रेवती नाम लोकैकसुन्दरी पुत्री आसीत्। तां परिणीतवान् आसीत् बलरामः। कृष्णस्य परिणयविषये कथा एवं श्रूयते—

विन्ध्यपर्वश्रेण्याः दक्षिणदिशि विदर्भः नाम देशः अस्ति। तत्रत्यं कुण्डिननगरं भीष्मकः नाम राजा पालयन् आसीत्। तस्य पुत्रस्य नाम रुक्मिः इति। रुक्मिः अप्रतिमवीरः। परशुरामात् ब्रह्मास्त्रं सम्पादितवान् आसीत् सः। अन्यानि अस्त्रविद्यातन्त्राणि द्रुमनामकात् महाराजात् सम्पादितवान् सः। कृष्णस्य विषये तस्य बहोः कालतः मात्सर्यम्। एतत् मात्सर्यं दिने दिने वर्धमानम् आसीत्। सः इदानीं कृष्णस्य प्रबलशत्रुषु अन्यतमः

जातः आसीत्।

रुक्मेः अनुजा रुक्मिणी। सा तेजस्विनी अनुपमसुन्दरी च। तस्याः सौन्दर्यं त्रिषु लोकेषु अपि सुविख्यातम् आसीत्। तां लक्ष्माः अपरावतारं मन्यमानाः बहवः भक्त्या पूजयन्ति स्म।



रुक्मिण्याः विषये स्वस्य आप्तानां मुखतः बहुधा श्रुतवान् आसीत् कृष्णः। एवमेव विविधानां जनानां मुखात् कृष्णस्य विषये अपि बहुधा श्रुतवती आसीत् रुक्मिणी। एवम् तयोः हृदये परस्परानुरागः अङ्कुरितः वर्धमानश्च आसीत्। अनुरागप्राबल्यात् तौ उभौ अपि मन्मथपीडाम् अनुभवतः।

"अहं यस्याम् अनुरक्तः जातः तां वशीकर्तुं त्रिषु लोकेषु कस्यापि धैर्यं नास्ति" इति कृष्णः चिन्तयन् अस्ति। रुक्मिणी तु सदा कृष्णम् एव ध्यायति। कृष्णनाम अहोरात्रं जपति। तया स्वमनसि कृष्णस्य मूर्तिः दृढं प्रतिष्ठापिता आसीत्।

किन्तु रुक्मिण्याः अग्रजः रुक्मिः कृष्णस्य नामश्रवणम् अपि न सहते खलु? "गोपस्य गृहे वर्धितस्य, गोचारणे निरतस्य तस्य अस्माकं च कः सम्बन्धः?" इति वदन् तिरस्कारं प्रदर्शयति सः। प्रसङ्गवशात् कुत्रापि कृष्णस्य नाम आगतं चेत् अपि सः उद्विग्नः भवति।

कदाचित् मगधदेशस्य गिरिव्रजपुरात् जरासन्धः वार्तां प्रेषितवान् यत् शिशुपालाय रुक्मिणी दातव्या इति। शिशुपालः जरासन्धस्य पालितपुत्रः। शिशुपालस्य पिता तु दमघोषः। वसुदेवस्य सहोदरी श्रुतश्रवा तस्य माता। दमघोषः जरासन्धः च दायादौ। अतः जरासन्धस्य अपेक्षानुगुणं दमघोषः चतुर्षु स्वपुत्रेषु ज्येष्ठं शिशुपालं जरासन्धाय अर्पितवान् आसीत्। शिशुपालस्य अपरं नाम सुनीधः इत्यपि।

'रुक्मिणी शिशुपालाय दातव्या' इति जरासन्धेन प्रेषितां वार्तां श्रुत्वा रुक्मिण्याः पिता भीष्मकः अङ्गीकारं प्रेषितवान्। किन्तु एषः अङ्गीकारः मनःपूर्वकं न दत्तः। यतः कृष्णाय एव रुक्मिणी दातव्या इति तस्यापि इच्छा। रुक्ष्मये कृष्णः सर्वथा न रोचते इति सः जानाति। 'शिशुपालाय एव रुक्मिणी



दातव्या' इति रुक्मिणा सूचितम् आसीत्। जरासन्धात् भीतिः तु आसीत् एव। अतः तेन असहायकतया अङ्गीकारः दत्तः।

'स्वकीया इच्छा पूरिता भवति' इति ज्ञात्वा जरासन्धः नितराम् सन्तुष्टः। विवाहमुहूर्तं निश्चित्य आप्तेभ्यः महाराजेभ्यः आमन्त्रणपत्रं प्रेषितवान् सः।

अङ्ग-वङ्ग-कलिङ्ग-पौण्ड्र-पाण्ड्य-काश-करूश-प्रभृतिभ्यः देशेभ्यः बहवः राजानः सपरिवारं विवाहार्थम् आगतवन्तः। शिशुपालेन सह करूशराजकुमारः, पौण्ड्रकः वासुदेवः, एकलव्यस्य पुत्रः वीर्यवान्, दन्तवक्त्रस्य पुत्रः सुवक्रः अन्ये केचन राजकुमाराः च आसन्।

जरासन्धः परिवारजनैः सह कुण्डिननगरं प्राप्तवान्। रुक्मिणी-शिशुपालयोः विवाहवार्ता सर्वत्र प्रसृता आसीत्। अतः विभिन्नेभ्यः नगरेभ्यः आगतानां जनानां सागरः एव दृश्यतेस्म कुण्डिननगरे।

रथैः, अश्वै, गजैः च सह गत्वा रुक्मिः जरासन्धं स्वागतीकृतवान्। अनन्तरं समस्तराजगौरवेण आगतान् सर्वान् सत्कृतवान्। तत्तस्य योग्यतानुगुणं वसतिव्यवस्थाम् अपि उपकल्पितवान् रुक्मिः।

पुरोहितः पूर्वदिने आगत्य मुहूर्तं स्मारयित्वा, तदर्थम् अपेक्षितां व्यवस्थां पुनः स्मारितवान्। मुहूर्तविषये पुनरपि नगरे सडिण्डिमघोषं वार्ता प्रसारिता। सर्वे राजानः स्वयोग्यतानुगुणं सेनाम् अलङ्कारपूर्वकं सज्जीकृतवन्तः। शिशुपालः वरवेषेण सर्वत्र सञ्चरन् मित्रैः सह सन्तोषेण सम्भाषणं कुर्वन् आसीत्।

विवाहात् पूर्वदिने एव द्वारकानगरं प्रति नारदमहर्षिः आगतवान्। नारदस्य तु गौरवर्णयुतं शरीरम्। सः धवलाम्बरधारी। सुवर्णकान्त्या विलसन्तीं जटां सुन्दरतया बद्ध्वा तदुपरि मयूरपिच्छैः निर्मितं छत्रं स्थापयित्वा, कटौ कृष्णाजिनं बद्ध्वा, करे वीणां गृहीत्वा नारायणनाम जपन् नारदः द्वारकां प्रविष्टवान्।

द्वारकानिवासिनः भक्त्या तं नमस्कृतवन्तः। नारदः मन्दहासपूर्वकं तान्

पश्यन् कृष्णप्रासादं प्रति गतवान्।

नारदस्य आगमनवार्तां श्रुत्वा उग्रसेनः, वसुदेवः, कृष्णः, बलरामः, अन्ये यादवप्रमुखाः च महाद्वारसमीपम् आगत्य नारदं स्वागतीकृतवन्तः। अनन्तरं तम् अर्घ्यपाद्यादिभिः सत्कृत्य सुधर्मानामके सभाभवने सुवर्णमयस्य आसनस्य उपरि उपवेशितवन्तः।

कृष्णः सर्वान् उपवेष्टुं सूचयित्वा स्वयम् अपि उपविष्टवान्। ततः नारदं नमस्कृत्य– "महर्षिवर्य! अपि कुशली भवान्? लोके जनाः देवाः च किं कुशलिनः? सर्वेषु लोकेषु स्वेच्छया सञ्चरता भवता अज्ञातः विषयः कोऽपि न भवति खलु? भवतः अत्र आगमनं कस्याश्चित् शुभघटनायाः सूचकम् इति अहं भावयामि। यादववंशस्य हितं चिन्तयन् भवान् अत्र आगतवान् इति तर्कयामि। भवतः आगमनेन अहं यादवाः च धन्याः" इति उक्तवान्।

कृष्णस्य स्तुतिपरेण वचनेन सन्तुष्टः नारदः– "कृष्ण! भवतः स्मरणमात्रेण लोके सर्वे सुखं प्राप्नुवन्ति। भवान् तु साक्षात् भगवत्स्वरूपः। भगवतः भवतः नामस्मरणं सदा कुर्वतः मम क्षेमस्य हानिः कुतः?" इति कृष्णम् उक्त्वा वीणां वादयन् 'नारायण! नारायण!' इति मध्ये मध्ये वदन् मधुरेण कण्ठेन मत्स्य-कूर्म-वराह-नारसिंहादीनाम् अवताराणां रामावतारस्य च कथां गीत्वा कृष्णस्य बालक्रीडां, बल-पराक्रमादीन्, कालियमर्दनं, गोवर्धनोद्धारणं, कंसवधं च





गायन् तस्य परिसरस्य रमणीयतां वर्धितवान्।

एतत् शृण्वन्तः सर्वे सभ्याः आनन्दपरवशाः जाताः। 'महर्षिणा नारदेन यस्य पूर्वावतारस्य कथा जीवनघटना च भक्त्या गीता सः कृष्णः अस्माकं सर्वेषाम् आत्मीयः नायकः' इत्येतम् अंशं स्मृत्वा ते पुलकिताः जाताः। आत्मनः जन्म सार्थकं भावितवन्तः ते।

नारदः गानं समाप्य वीणां पार्श्वे स्थापितवान्। महर्षेः नारदस्य मुखात् निस्सरिष्यमाणस्य वचनस्य श्रवणे सर्वेषां महत् कुतूहलम् आसीत्।

तदा कृष्णः मन्दहासपूर्वकं नारदम् उक्तवान्- "मम जीवनवृत्तान्तम् आद्यन्तं श्रावितं भवता। तदस्तु तावत्। केन प्रयोजनेन भवान् मम समीपम् आगतवान् इति वदतु तावत्" इति।

तदा नारदः एवम् उक्तवान्-

"दक्षिणसमुद्रतीरे गोकर्णं नाम तीर्थक्षेत्रम् अस्ति। तत्र शङ्करः दिव्यलिङ्गस्वरूपेण तिष्ठति। तस्य महादेवस्य पुरतः वीणां वादयित्वा तस्य कीर्तनं कृत्वा, पूजां च कृत्वा ततः कुबेरदर्शनार्थं प्रस्थितवान्। मार्गे कुण्डिनपुरस्य राजानं भीष्मकं दृष्टवान्। सः अपि मां सादरं सत्कृत्य भक्तिं प्रदर्शितवान्। तत्रत्यः विशेषः नाम जरासन्धादयः सर्वे राजानः तत्र उपस्थिताः सन्ति। 'एते राजानः अत्र आगत्य किं कुर्वन्ति?' इति भीष्मकं पृष्ठवान् अहम्।

तदा भीष्मकः माम् उक्तवान्- "मम पुत्री रुक्मिणी चेदिदेशस्य राज्ञे शिशुपालाय दातव्या इति निश्चितम् अस्ति। मम आह्वानं मानयन्तः एते अत्र उपस्थिताः सन्ति। श्वः प्रातः एव विवाहमुहूर्तः अस्ति" इति।

भवान् तत्र कुत्रापि न दृष्टः मया। अतः एतां शुभवार्तां भवन्तं निवेद्य गच्छामि इति आलोच्य अत्र आगतवान्। महत्त्वपूर्णां तां वार्तां भवान् न जानाति इति तु आश्चर्यकरम् एव।"

सर्वे आश्चर्येण कुतूहलेन च नारदस्य कथनं शृण्वन्तः आसन्। नारदः कथनम् अनुवर्तितवान्-

"कृष्ण! भवान् तां रुक्मिणीं मनसा अपेक्षते एव खलु? भीष्मकः तु स्वपुत्रीं भवतः शत्रवे दातुं सङ्कल्पितवान् अस्ति। भवान् न गच्छति चेदपि विवाहस्तु निर्विघ्नं प्रचलिष्यति। किन्तु तेन भवतः एव महती अपकीर्तिः। अतः भवता इतः परं विलम्बः न करणीयः। महाराजेन उग्रसेनेन, सात्यकिना, इतरैः वीरयोधैः, सेनया च सह इतः प्रस्थानं करोतु। तत्र गत्वा तत्रत्यान् सर्वान् पराजित्य विजयं सम्पाद्य रुक्मिणीम् अपहृत्य आनयतु। सुदर्शनचक्रे स्थिते असाध्यं किं वा स्यात्? अन्यः अपि विशेषः मया वक्तव्यः अस्ति। अहम् आकाशमार्गे अदृश्यरूपेण स्थित्वा रुक्मिणी कथम् अस्ति इति दृष्टवान्। सा लीलोद्याने उपविश्य सखीभिः सान्त्व्यमाना रुदती अस्ति। भवन्तम् एव ध्यायति सा। भवतः दर्शनम् इच्छन्ती सदा परितपति। प्रपञ्चे सा भवन्तं विना अन्यत् किमपि न पश्यति। भवन्तं सर्वस्वं मन्यते सा। हा हन्त! तस्याः परिस्थितिः इदानीं शोचनीया जाता। तस्याः केशाः विकीर्णाः सन्ति। शाटिका, चोलः च अश्रुधारया आर्द्रीकृतः अस्ति। आभूषणानि शरीरात् अपनीतवती अस्ति सा। सा सखेदं दीर्घम् उष्णं च निःश्वसिति। उद्वेगवशात् तस्याः शरीरं कम्पते। सखीभिः कृताः उपचाराः, सान्त्वनवचनानि च व्यर्थानि एव। अहम् अन्यस्य पुरुषस्य नाम श्रोतुम् अपि न इच्छामि इति वदति सा। इदानीन्तनविवाहस्य अपेक्षया मरणम् एव वरम् इति तस्याः आशयः। तस्याः दयनीयां दशां दृष्ट्वा पाषाणहृदयः अपि सन्तापं प्राप्नुयात्। एवं स्थिते परमकरुणामयः भवान् एतत्सर्वं दृष्ट्वा अपि कथं मौनं स्थितवान् इत्येव न ज्ञायते मया। किं तां परीक्षते भवान्? अलं परीक्षया। तस्याः प्राणान् रक्षतु कृष्ण! आर्तरक्षकः खलु भवान्? सर्वज्ञम् इतोऽपि अधिकं किं वदामि? अहं गच्छामि। अनुज्ञया अनुगृह्णातु माम्" इति।

एतावत् उक्त्वा नारदः स्वकीयं मार्गम् अनुसृतवान्।





# चोरः बद्धः

कुमारः श्रीपतिः च आत्मीयौ स्नेहितौ। तौ बाल्ये एव स्वग्रामं त्यक्त्वा गिरिपुरे निवासम् आरब्धवन्तौ। तत्र कुमारः नारिकेलविक्रयणं करोति स्म। श्रीपतिः तु कस्यचित् धनिकस्य लिपिकारः आसीत्।

एकदा मध्याह्नसमये श्रीपतिः कुमारस्य आपणम् आगत्य उक्तवान्– "कुमार! भवतः साहाय्यं किञ्चित् आवश्यकम् आसीत्। मम पत्नी पुत्रीं प्रसूतवती इति वार्ता अद्य आगता। पत्नीं पुत्रीं च द्रष्टुम् अहं प्रस्थितः। किन्तु अत्रान्तरे मम ग्रामतः अन्या वार्ता आगता। मां द्रष्टुं मम मातापितरौ ग्रामात् प्रस्थितवन्तौ। किन्तु तौ कदा अत्र प्राप्नुतः इति न जानामि। प्रायः तौ अन्धकारप्रसारानन्तरं प्राप्नुतः। तयोः आगमनसमये मम गृहं कीलितं भवति चेत् उचितं न खलु? अतः भवान् मम गृहे शयनं कर्तुं शक्नुयात् वा? श्वः प्रातः सूर्योदयात् पूर्वम् एव अहं प्रत्यागच्छेयम्" इति उक्तवान् श्रीपतिः।

"अस्तु तावत्, गृहरक्षणविषये भवतः चिन्ता मास्तु। अहं रात्रौ शीघ्रम् एव भोजनं समाप्य भवतः गृहे शयनं करोमि" इति उक्तवान् कुमारः।

कुमारस्य हस्ते कुञ्चिकां स्थापयित्वा ततः निर्गतवान् श्रीपतिः। कुमारः सायं वाणिज्यं समाप्य स्वगृहं गतवान्। गृहप्राप्त्यनन्तरं तेन गृहे दृष्टं यत् पत्नी शरीरम् आच्छाद्य सुप्तवती अस्ति। तस्याः महान् ज्वरः!

कुमारः शीघ्रं गत्वा वैद्यम् आनीतवान्। वैद्यः काश्चन गुलिकाः दत्त्वा प्रत्येकस्मिन् यामे एकैका गुलिका दातव्या इति उक्त्वा गतवान्।

कुमारस्य इदानीम् उभयसङ्कटम्। एकत्र

श्रीपतेः गृहस्य रक्षणम् अङ्गीकृतम्। अपरत्र पत्नी तीव्रेण ज्वरेण पीडिता अस्ति। किं करणीयम् इति न ज्ञायते कुमारेण।

तदा सः स्वगृहस्य पुरतः स्थितं भाटकगृहम् आगतवन्तम् आदित्यनामकं युवकम् अकस्मात् स्मृतवान्। आदित्यः ब्रह्मचारी इत्यतः एकाकितया निवसति।

कुमारः तस्य समीपं गत्वा उक्तवान्– "अनिवार्यतया किञ्चित् क्लेशं यच्छन् अस्मि। अहम् श्रीपतेः गृहस्य रक्षणम् अङ्गीकृतवान् आसम्। किन्तु पत्न्याः अस्वास्थ्यकारणतः तत् कर्तुं न शक्नोमि। भवान् श्रीपतेः गृहे अद्य शयनं कर्तुं शक्नोति वा?" इति।

आदित्यः हसन्– "एतत् अवश्यं करोमि। प्रतिवेशिना साहाय्यं करणीयम् एव खलु?" इति उक्त्वा कुमारस्य हस्ततः कुञ्चिकां स्वीकृतवान्।

अनन्तरदिने सूर्योदयसमये कुमारस्य पत्न्याः ज्वरः अपगतः। आदित्यस्य हस्ततः कुञ्चिकां प्रतिस्वीकर्तुम् इच्छन् कुमारः आदित्यस्य गृहं गतवान्। तत्र अदित्यस्य अनुपस्थितिं दृष्ट्वा श्रीपतेः गृहं गतवान्। तत्र द्वारं केवलं पिहितम् आसीत्, न तु कीलितम्। कुमारः द्वारम् उद्घाटितवान्। तत्रस्थं दृश्यं दृष्ट्वा सः सम्भ्रान्तः।

आदित्यः स्तम्भे बद्धः आसीत्। गृहे वस्तूनि इतस्ततः विकीर्णानि आसन्।

कुमारः आदित्यस्य मुखात् वस्त्रगोलकं निष्कासितवान्। तस्य हस्तयोः पादयोः च



बन्धनम् अपनीतवान्।

"किं प्रवृत्तम्?" इति आदित्यं पृष्टवान् कुमारः।

आदित्यः द्वित्राणां क्षणानाम् अनन्तरं कथनशक्तिं सम्पाद्य उक्तवान्– "मध्यरात्रसमये द्वारताडनशब्दः श्रुतः। श्रीपतेः मातापितरौ आगतौ स्याताम् इति चिन्तयित्वा अहं द्वारम् उद्घाटितवान्। तदा कश्चन चोरः अकस्मात् अन्तः प्रविश्य छुरिकां प्रदर्शयन् स्तम्भसमीपं गन्तुं मां नेत्रसङ्केतेन सूचितवान्। मम मुखं वस्त्रेण पूरयित्वा मम हस्तौ पादौ च योजयित्वा मां स्तम्भे बद्धवान्। आक्रोशनं कर्तुं किं, सम्यक् श्वासोच्छ्वासं कर्तुम् अपि अहं न शक्तवान्। भयवशात् अहं गतप्राणः जातः इव" इति।

इदानीं किं करणीयम् इति न जानाति कुमारः। चोरेण किं किं चोरितम् इति द्रष्टुम् उद्युक्तः सः। तावती काले श्रीपतिः तत्र आगतवान्। गृहस्य परिस्थितिं दृष्ट्वा सः पृष्टवान्– "कुमार! किं प्रवृत्तम्?" इति।

यावत् कुमारः किमपि वक्तुम् उद्युक्तः तावता श्रीपतिः प्रकोष्ठं प्रविश्य उद्घाटितां पेटिकां दृष्ट्वा– "हा हन्त! अहं हतः जातः। पेटिकायां स्थितानि रजताभरणानि पञ्चशतं रूप्यकाणि च चोरितानि अभवन्" इति गद्गदस्वरेण वदन् अश्रूणि स्रावयन् बहिः आगतवान्।

कुमारः स्वगृहस्य परिस्थितिम्, आदित्यस्य साहाय्यं, चौर्यप्रकरणं च निवेदितवान्। तदा श्रीपतिः खेदेन





उक्तवान्— "अत्र भवतः दोषः कोऽपि नास्ति। सर्वं मम दौर्भाग्यवशात् प्रवृत्तम्" इति।

किन्तु एतेन कुमारः मनःसमाधानं न प्राप्तवान्। सर्वं मत्तः एव जातम् इति सः खेदम् अनुभवति। सः तदा तदा पत्नीम् वदति— "यावत् श्रीपतये किमपि न दद्यां तावत् मम मनःशान्तिः नास्ति" इति।

एवं स्थिते कदाचित् कुमारस्य दूरबन्धुः जनार्दनः नाम रक्षकभटाधिकारी तं ग्रामम् आगतवान्। कुमारः तं स्वगृहं प्रति भोजनार्थम् आहूतवान्।

एवं भोजनार्थम् आगतेन जनार्दनेन सह वार्तालापसमये कुमारः श्रीपतेः गृहे प्रवृत्तं चौर्यं निवेद्य तत्र आत्मनः अजागरूकतायाः पात्रम् अपि सविस्तरम् उक्तवान्।

एतत् श्रुत्वा जनार्दनः पृष्टवान्— "आदित्यः सद्यः एतं ग्रामम् आगतवान् खलु? सः किं विश्वासार्हः?" इति।

"सः सद्यः एव आगतवान् इति तु सत्यम् एव। एकाकी एव निवसति। सज्जनः इव दृश्यते। इतोऽपि अधिकं किमपि न जानामि" इति उक्तवान् कुमारः।

जनार्दनः क्षणकालम् आलोच्य पुनः पृष्टवान्— "चोरः आदित्यम् रज्ज्वा स्तम्भे बद्धवान् आसीत् खलु? रज्ज्वाः ग्रन्थिः आदित्यस्य पुरतः आसीत्, उत पृष्ठतः? इति"।

"ग्रन्थिः तु पुरतः एव आसीत्। अहं सम्यक् स्मरामि यत् ग्रन्थिः उदरस्य पुरतः एव आसीत् इति" इति उत्तरं दत्तवान् कुमारः।

तदा जनार्दनः हसन् उक्तवान्— "एवं तर्हि आदित्यः एव चोरः। सः स्वयम् आत्मानं स्तम्भे बद्धवान् अस्ति। अतः एव रज्जोः ग्रन्थिः पुरोभागे आसीत्। चोरेण केनचित् सः यदि बद्धः स्यात् तर्हि पृष्ठभागे ग्रन्थिः भवेत्, न तु पुरोभागे। अन्यः अपि कश्चन अंशः अत्र चिन्तनीयः अस्ति। चोरः गृहस्य अन्तः कञ्चित् बद्ध्वा द्वारं केवलं पिधाय न गच्छति, प्रायः सः बहिस्तात् कीलयति एव" इति।

"एतत्सर्वं स्यात् नाम। किन्तु आदित्यः एव चोरः इति कथं प्रमाणीकर्तुं शक्यते?" इति पृष्टवान् कुमारः।

एतदर्थं किं करणीयम् इति उक्त्वा जनार्दनः गृहं गतवान्।

जनार्दनस्य सूचनानुगुणं कुमारः आदित्यस्य गृहं गत्वा उक्तवान्— "रात्रौ प्रहरिभिः भटैः कश्चन चोरः बद्धः अस्ति। सः उन्मत्तः इव व्यवहरति। एषा उन्मत्तता मिथ्या स्यात् वा इति आरक्षकाणां सन्देहः। भवान् एकवारम् आरक्षकस्थानकं गत्वा चोरः सः एव वा न वा इति ज्ञात्वा वक्तुं शक्नोति वा?" इति।

कुमारेण सह आरक्षकस्थानकं गतवान् आदित्यः। तत्र कश्चन उन्मत्तः इव दृश्यमानः छिन्नानि वस्त्राणि धृत्वा आकाशं पश्यन् उपविष्टः आसीत्। तं दृष्ट्वा आदित्यः उक्तवान्— "तद्दिने श्रीपतिगृहे चौर्यं कृतवान् एषः एव। ते एव नेत्रे! तदेव मुखम्! सा एव नासिका! तदेव अङ्गसौष्ठवम्। उन्मत्तः इव व्यवहरन् एषः एव चोरः इत्यत्र सन्देहः एव नास्ति" इति।

अनन्तरक्षणे उन्मत्तः इव व्यवहरन् जनार्दनः व्याघ्रः इव उत्प्लुत्य आदित्यं दृढं गृहीत्वा— "चोरः लब्दः इदानीम्। भोः, कशाप्रहारैः सत्यं वाचयामि, उत वृश्चिकसर्पादिभिः युक्ते प्रकोष्ठे स्थापयित्वा सत्यं वाचयामि? अथवा स्वयं एव चौर्यत्वम् अङ्गीकरोति? किं पादप्रहारः अपेक्षितः?" इति कोपेन गर्जितवान्।

आदित्यः भीत्या इदानीं स्विन्नः। सः कम्पमानेन स्वरेण आत्मनः चोरत्वम् अङ्गीकृतवान्। चोरितानि वस्तूनि प्रत्यर्पयामि इत्यपि उक्तवान्।

कश्चित् रक्षकभटः आदित्येन सह गत्वा चोरितानि वस्तूनि आनीतवान्। रजतमयानि आभरणानि प्राप्तानि। धनं तु तेन पूर्णतः व्ययितम् आसीत्।

जनार्दनः आदित्यं कारागारे स्थापयित्वा श्रीपतिं तत्र आनायितवान्। श्रीपतिः आभरणानां प्राप्त्या सन्तुष्टः सन् उक्तवान्— "मम पुत्री शुभे मुहूर्ते जाता इति भाति। अतः एतत् प्राप्तम्" इति।





# त्रीणिताम्रनाणकानि

चीनादेशे चाङ्गूनामकः तमाखु-वाणिज्येन जीवति स्म। सः दण्डस्य उभयोः पार्श्वयोः वेणुमयं कण्डोलं बद्ध्वा, तयोः मध्ये तमाखुं स्थापयित्वा दण्डं स्कन्धे आरोप्य गृहात् निर्गच्छति। मार्गे मार्गे अटन् उच्चैः 'तमाखुःsss' इति वदन् विक्रयणं करोति। जनसम्मर्दयुते मार्गे यद्यपि तस्य गमनं क्लेशाय, तथापि तेन तत्रैव गत्वा विक्रयणं करणीयम्। जनसञ्चाररहिते मार्गे को वा तमाखुं क्रीणीयात्?

एकदा प्रातःकाले तामाखुकण्डोलयुतं दण्डं स्कन्धे आरोप्य जनान् अपसारयन् अग्रे गच्छन् आसीत् चाङ्गू। तदा छिन्नवस्त्राणि धृतवान् कश्चन वृद्धः तं स्थगयित्वा– "भोः, मम धूमनलिकां तमाखुना पूरयतु भोः। अल्पं वाणिज्यम् इति मा आक्षिपतु कृपया" इति उक्तवान्।

कण्डोलम् अधः स्थापयितुम् इच्छन् चाङ्गू इतस्ततः दृष्टवान्। किन्तु तत्र कुत्रापि अवकाशः न आसीत्। वृद्धः त्रीणि ताम्रनाणकानि प्रदर्शितवान्। धूमनलिकायाः पूरणार्थं तावतः धनस्य तमाखुः न अपेक्षितः। 'एतस्मै तमाखुदानेन मम लाभः एव' इति आलोचितवान् चाङ्गू।

"अस्मिन् जनसम्मर्दे कण्डोलम् अवतारयितुं न शक्नोमि। अतः भवान् एव स्वयम् धूमनलिकां तमाखुना पूरयतु भोः" इति उक्तवान् चाङ्गू।

वृद्धः अङ्गुष्ठतर्जन्योः साहाय्येन त्रिवारं तमाखुं स्वीकृत्य धूमनलिकायां स्थापितवान्। वस्तुतः सामान्यायां धूमनलिकायां तावान् तमाखुः न अपेक्षितः। इदानीं तु तावत् पूरितं चेदपि धूमनलिकायाः अर्धभागः अपि न पूर्णः। चाङ्गू एतत् दृष्ट्वा आश्चर्यचकितः।

"चीनादेशीया जानपदकथा"

वृद्धः कण्डोले स्थितं समग्रं तमाखुं धूमनलिकायां स्थापितवान्।

चाङ्ग् अत्याश्चर्येण वृद्धस्य व्यवहारं पश्यन् स्थितवान्। किन्तु कामपि प्रतिक्रियां प्रकटयितुम् अशक्तः सः खेदेन मौनं स्थितवान्। सन्तापपूर्णया दृष्ट्या सः कण्डोलं पश्यति, पुनश्च तं वृद्धम्।

वृद्धः चाङ्गुसमीपे यावत् तमाखुः आसीत् तावदपि धूमनलिकायां स्थापितवान्। त्रीणि ताम्रनाणकानि रिक्ते कण्डोले पातयित्वा नलिकायाम् अग्निं संयोज्य धूमपानं कुर्वन् जनसमूहे अदृश्यतां गतवान्।

असहायः चाङ्ग् कण्डोलं स्वीकृत्य गृहं प्रति प्रस्थितवान्। किञ्चिद्दूरं गमनानन्तरं तेन अनुभूतं यत् पृष्ठतः विद्यमानः कण्डोलः भारायते इति। यदा भारः वर्धमानः एव दृष्टः तदा सः मार्गस्य पार्श्वे कण्डोलं स्थापितवान्।

दृष्टिं परिवृत्य दर्शनेन तेन ज्ञातं यत् कण्डोलः ताम्रनाणकैः पूर्णः इति। सः परमाश्चर्येण मूकः सन् कण्डोलं हस्तद्वयेन कथञ्चित् उन्नीय गच्छन् महता कष्टेन गृहं प्राप्तवान्।

गृहप्रवेशसमये पादः द्वारबन्धेन घट्टितः जातः। तेन सः पतितवान्। गृहे सर्वत्र ताम्रनाणकानि विकीर्णानि। आयासवशात् इदानीं सः श्वासोच्छ्वासं कर्तुम् अपि कष्टम् अनुभवति। तथापि तानि नाणकानि मुष्ट्या संगृह्य कस्याञ्चित् पेटिकायां स्थापयित्वा पेटिकां दृढं पिहितवान्।

तदनन्तरं गृहात् बहिः आगत्य दीर्घं



निःश्वसन् प्रवृत्तां घटनाम् अवगन्तुं प्रयतमानः आसीत् सः। तावता गृहस्य अन्तर्भागतः 'खणाल्' इति शब्दः श्रुतः। यदा तेन अन्तः आगत्य दृष्टं तदा पेटिकायाः आवरणम् उद्गतम् आसीत्। पेटिकातः ताम्रनाणकानि पतन्ति आसन्। नाणकानां सङ्ख्या निरन्तरं वर्धते!

चाङ्ग् शिरसि हस्तौ स्थापयित्वा गभीरम् आलोचितवान्। कश्चन उपायः तस्य मनसि स्फुरितः। सः झटिति कुसूलं रिक्तीकृत्य ताम्रनाणकानि तस्य अन्तः पातितवान्। सायङ्कालतः पूर्वं न केवलं सः कुसूलः, अन्यौ द्वौ कुसूलौ अपि पूर्णौ जातौ।

इदानीं चाङ्ग् नितरां सन्तुष्टः। तस्य गृहे नाणकानि कुसूलपरिमाणेन पतितानि सन्ति। अतः तेन इदानीं मार्गे मार्गे तमाखुविक्रयणं करणीयं नास्ति। सः अनन्तरदिने एव एकम् आपणं भाटकार्थं स्वीकृत्य तत्र कुसीदवाणिज्यम् आरब्धवान्।

ये ये ऋणं पृच्छन्ति तेभ्यः सर्वेभ्यः सः न्यूनवृद्ध्या ऋणं ददाति। अतः बहवः तस्मात् ऋणं स्वीकृत्य गतवन्तः। आश्चर्यं नाम कुसूलात् यथेष्टं नाणकानि स्वीकृतानि चेदपि कुसूले न्यूनता न दृश्यते! नाणकराशिः वर्धमानः एव दृश्यते!

कदाचित् कश्चन वृद्धः तस्य आपणम् आगतवान्। कानिचन जीर्णानि वस्तूनि प्रदर्श्य– "एतानि विक्रेतुम् इच्छामि। कृपया क्रीणातु भोः" इति प्रार्थितवान्।

चाङ्ग् क्षणकालं तानि परीक्षादृष्ट्या इतस्ततः परिवर्तयन् परिशीलितवान्। अनन्तरं पृष्टवान्– "एतेषां मूल्यरूपेण भवान् कियत् धनम् इच्छति?" इति।

"त्रीणि ताम्रनाणकानि ददातु, पर्याप्तम्" इति उक्तवान् सः वृद्धः।

चाङ्ग् वृद्धाय त्रीणि ताम्रनाणकानि दत्तवान्। तद्दिनतः चाङ्ग्गृहे नाणकवृद्धिः स्थगिता जाता। किन्तु एतावता प्राप्तानि नाणकानि एव कुसूलपरिमाणेन आसन् खलु? अतः चाङ्ग् सुखेन जीवितवान्।





# वामनानां साहाय्यम्

कस्यचित् धनिकस्य गृहे सुलोचना नाम सुन्दरी आसीत्। सौभाग्यवशात् अनुरूपः वरः तया लब्धः। तस्य नाम विवेकः इति। तयोः विवाहः सवैभवं सम्पन्नः। मातापितरौ पुत्रीं पतिगृहं प्रेषितवन्तौ।

विवेक-सुलोचनयोः गृहस्थजीवनं सन्तोषेण प्रचलति। कदाचित् विवेकः एकं तन्तुचक्रं कण्डोलमितं कार्पासं च आनीय पत्न्याः पुरतः स्थापितवान्, पत्नीम् उक्तवान् च— "इतःपरं भवती प्रतिदिनं तन्तुनिर्माणं करोतु। तन्तुः दृढः समाकारः च यथा स्यात् तथा जागरूकता भवतु" इति।

सुलोचना मन्देन स्वरेण पृष्टवती— "किं, मया तन्तुनिर्माणं करणीयं वा? तन्तुः कथम् उत्पादनीयः इति अहं न जानामि खलु?" इति असहायकतां प्रदर्शितवती सुलोचना।

सुलोचना स॰ ॱ कार्येषु चतुरा। एतादृशी तन्तुनिर्माणं न जानाति इत्यत्र विवेकस्य विश्वासः एव नास्ति। 'सर्वेषु कार्येषु चतुरा एषा तन्तुनिर्माणम् अपि अवश्यं जानीयात् एव। आलस्यवशात् एवम् असत्यं वदति' इति आलोचितवान् विवेकः।

"अलम् असत्यकथनेन। प्रतिदिनम् अपि नियतरूपेण किञ्चित् तन्तुं निर्माय मम पुरतः स्थापनीयम्। 'न जानामि' इति आलस्यप्रेरितं भवत्याः वचनम् अङ्गीकर्तुम् अहं न सिद्धः" इति साग्रहम् उक्त्वा ततः निर्गतवान् विवेकः।

सुलोचना असहायकतया आकाशं पश्यति। सा कार्पासं पुरतः संस्थाप्य तन्तुनिर्माणार्थं प्रामाणिकप्रयत्नं कृतवती। किन्तु अनभ्यासवशात् तया निर्मितः तन्तुः तत्र तत्र च्छिन्नः भवति। इतोऽपि प्रयत्नेन निर्मितः तन्तुः यद्यपि न च्छिन्नः, किन्तु एकत्र



स्थूलः अपरत्र कृशः च दृश्यते। पुनः कुत्रचित् कार्पासः पिण्डरूपेण तिष्ठति।

सायङ्काले पतिः यदा गृहं प्रत्यागतः तदा तया अत्यल्पप्रमाणेन तन्तुः निर्मितः आसीत्। सोऽपि न उत्तमस्तरीयः। एतत् दृष्ट्वा विवेकः उग्रावतारं प्राप्तवान्।

"किं भोः एतत्? मां धिक्करोति वा? तन्तुनिर्माणम् अजानती इव मिथ्याभिनयं करोति। एवं चेत् या तन्तुनिर्माणं जानीयात् तादृशीम् एव अपरां परिणयेयम्। श्वः प्रातः कार्यनिमित्तं नगरं गमिष्यामि। दशदिनानाम् अनन्तरम् एव प्रत्यागमनम्। तावता एतैः कार्पासैः तन्तुः निर्मातव्यः। तथा कर्तुं न शक्तं चेत् भवत्याः भाविजीवनम् अन्धकारमयं भवेत्" इति कोपेन उक्तवान्।

सुलोचनायाः इदानीम् उभयसङ्कटम्। तस्याः मातृगृहे तु तन्तुचक्रं न आसीत्। अतः सा तन्तुनिर्माणं सर्वथा न जानाति। पत्युः ग्रामे तु भिन्नम् एव वातावरणम्। तत्र प्रतिगृहं तन्तुनिर्माणं कुर्वन्ति। तन्तुनिर्माणम् अजानत्याः गौरवं सर्वथा न आसीत् तत्र।

नगरं प्रति पत्युः निर्गमनानन्तरं चिन्ताक्रान्ता सुलोचना गृहस्य पार्श्वे स्थिते क्रीडाङ्गणे स्थितायाः शिलायाः उपरि उपविष्टवती।

किञ्चित्कालानन्तरं कुत्रचित् प्रचलतः सम्भाषणस्य ध्वनिः श्रुतः। सा परितः दृष्टिं प्रसारितवती। समीपे कोऽपि न दृष्टः। एषाः पुनरपि सध्यानं श्रुतवती। तदा सा ज्ञातवती यत् आत्मना उपविष्टायाः शिलायाः अधस्यात् एव स च ध्वनिः आगच्छति इति।

सा शिलातः उत्थाय महता प्रयत्नेन शिलां ततः अपसारितवती। तदा तत्र कष्टेन प्रवेष्टुं योग्यं बिलं तया दृष्टम्। सा कथञ्चित् बिलं प्रविष्टवती। तत्र कश्चन विशालः प्रकोष्ठः तया दृष्टः। प्रकोष्ठे पञ्चषाः वामनाः स्त्रियः उपविष्टाः आसन्। ताः आकारेण षड्वर्षीयाः इव भासन्ते स्म। तासां सर्वासां पुरतः तन्तुचक्राणि आसन्। ताः वामनाः चेदपि चक्रं महता वेगेन चालयन्त्यः क्षणाभ्यन्तरे कण्डोलमितं कार्पासं तन्तुरूपेण परिवर्तयन्ति स्म। ताभिः निर्मितः तन्तुः ऊर्णजालस्य तन्तुः

इव सूक्ष्मः समानाकारकः च आसीत्।

तासां षण्णाम् अपि स्त्रीणां मुखं पार्श्वे वलितम् आसीत्। ताः साक्षात् अग्रे द्रष्टुं न शक्नुवन्ति। तथापि ताः वलितेन एव मुखेन निरन्तरं सम्भाषणं कुर्वत्यः हसन्त्यः च आसन्।

सुलोचना तासां समीपं गत्वा उक्तवती– "मातरः! भवत्यः काः इति न जानामि। अल्पेन तन्तुचक्रेण भवतीभिः क्रियमाणं तन्तुनिर्माणं दृष्ट्वा अहम् आश्चर्यम् अनुभवामि। भवतीनां सामर्थ्यस्य शंताशः मयि स्यात् चेत् अपि अहं बहु साधयितुं शक्नुयाम्" इति।

एतत् श्रुत्वा ताः षड् महिलाः अपि चक्रचालनं स्थगयित्वा पृष्टवत्यः– "तादृशं किं दुःखं भवत्याः?" इति।

तदा सुलोचना पत्युः सूचनां निवेद्य स्वकीयम् असामर्थ्यम् अपि निवेदितवती।

ताः एतस्याः कष्टं श्रुत्वा परस्परं मुखं दृष्टवत्यः। तदा सुलोचना उक्तवती– "इदानीं मया किं करणीयम् इति अहं न जानामि। दशदिनानाम् अनन्तरं मम पतिः प्रत्यागमिष्यति। तावता मया कण्डोलमितः कार्पासः तन्तुरूपेण न परिवर्तितः चेत् मम शोचनीया गतिः भवेत्" इति।

तदा ताः स्त्रियः हसन्त्यः उक्तवत्यः– "एतदर्थं किमर्थं भवत्याः चिन्ता? वयं तन्तुनिर्माणकार्यं कुर्मः। चिन्तां न करोतु। यद्दिने भवत्याः पतिः प्रत्यागमिष्यति तद्दिने अस्मान् आह्वयतु। वयम् आगत्य केषुचित्



निमेषेषु कार्यं समापयिष्यामः। मध्याह्ने अस्माकं भोजनव्यवस्थां करोतु, पर्याप्तम्'' इति।

सुलोचना ताभिः यथा सूचितं तथैव कृतवती। विवेकस्य प्रत्यागमनदिने ताः वामनस्त्रियः तन्तुं निर्माय राशीकृतवत्यः।

तासां प्रतिगमनतः पूर्वम् एव विवेकः प्रत्यागतवान्। वलितमुखीः ताः षट्स्त्रियः दृष्ट्वा– ''काः एताः?'' इति पत्नीं पृष्टवान्।

''अस्माकं प्रतिवेशिन्यः एताः। मया सह स्थातुम् अत्र आगताः। भोजनं समाप्य गच्छन्तु इति मया निवेदितम्'' इति उक्तवती सुलोचना। किञ्चित्कालानन्तरं ते सर्वे भोजनार्थम् उपविष्टवन्तः। सम्भाषणसमये भोजनसमये चापि तासां मुखं वलितम् एव दृश्यते स्म।

तदा ताः पृष्टवान् विवेकः– ''किं भोः भगिन्यः, भवतीनां मुखम् एवं किमर्थं वलितम् अस्ति? जन्मतः एव एवम् अस्ति, उत अनन्तरकाले केनापि कारणेन एवं जातम्?'' इति।

''जन्मसमये तु इतरेषाम् इव अस्माकम् अपि मुखम् आसीत्। प्रातःकालतः सायंपर्यन्तं वयं तन्तुनिर्माणे मग्नाः भवामः। निरन्तरं चक्रचालनतः अस्मकं मुखानि वलितानि सन्ति'' इति उक्तवत्यः ताः स्त्रियः।

तासां निर्गमनानन्तरं विवेकः तन्तुं, चक्रं, पत्न्याः मुखं च परीक्षादृष्ट्या दृष्टवान्। पत्न्याः मुखं किञ्चिदिव वलितम् इति अभासत विवेकस्य मनसि। 'मम पत्नी तन्तुनिर्माणं करोति चेत् तस्याः मुखम् अपि वलितं भवेत्' इति आलोच्य विवेकः पत्नीम् उक्तवान्– ''भवत्या एतावता यावत् तन्तुनिर्माणं कृतं तावत् एव पर्याप्तम्। इतःपरं तन्तुनिर्माणं सर्वथा मास्तु। तन्तुचक्रं कटाक्षेण अपि मा पश्यतु'' इति साग्रहम् उक्त्वा तन्तुचक्रं बद्ध्वा अट्टे क्षिप्तवान्।

''अहो! देवो दयालुः!'' इति उद्गारं प्रकटयन्ती, वामनानां साहाय्यं कृतज्ञतापूर्वकं स्मृतवती सुलोचना।





## अतिविशालानि पर्णानि

मास्करिन्द्वीपेषु विद्यमानानां तालवृक्षाणां (राफिया पाल्म् नामकानां) अमेजानुप्रान्ते विद्यमानानां वेणुजातीयानां तालवृक्षणां (बाम्बू पाल्म् नामकानां) च पर्णानि अतिविशालानि भवन्ति। एतेषां पर्णानां वैशाल्यं कदाचित् ६५ द्वादशाङ्गुलं यावत् अपि भवति!

## रक्षणकार्यभारः

दीर्घदेहिजातीयाः 'मेर्माट्' प्राणिनः सदा रक्षणव्यवस्थां परिपालयन्ति। आक्रमणार्थं कोऽपि पशुः पक्षी वा यदा आगच्छति तदा रक्षणकार्ये नियुक्ताः 'मेर्माट्' प्राणिनः उच्चैः षीष्कारं कुर्वन्ति। एतत् श्रुत्वा अन्ये झटिति बिले निलीय तिष्ठन्ति। अपायनिवृत्तेः अनन्तरं रक्षककार्ये नियुक्ताः पुनरपि षीष्कारं कुर्वन्ति।



गतेषु ६०० दशलक्षवर्षेषु प्रायः २०००वारं भूमेः लघुग्रहाणां च मध्ये घर्षणं जातं स्यात् इति अभिप्रयन्ति विज्ञानिनः।



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अजपालः - | Goat-herd | दीर्घदेही - | Bandicoot |
| अधस्तात् - | From beneath | धूमनलिका - | Hookah |
| अवचित्य - | Having plucked | नियतरूपेण - | Promptly |
| आच्छादकम् - | Blanket | निर्बाधम् - | Without obstruction |
| आत्मगतम् - | To oneself | पर्णम् - | Leaf |
| आहत्य - | Totally | पिच्छम् - | Peacock feather |
| उत्कोचः - | Bribe | पिहितम् - | Closed |
| ऊर्णजालम् - | Cobweb | पुलकितः - | Thrilled |
| कार्पासः - | Cotton | प्रवर्तते - | Happens |
| कीलितम् - | Locked | प्रहरी - | Night Sentry |
| कुञ्चिका - | Key | भीरुः - | Timid person |
| कुसीदवाणिज्यम् - | Money-lending | भुजास्फालनम् - | Patting one's shoulders |
| कुसूलः - | Barn | यामः - | A period of three hours |
| ग्रन्थिः - | Knot | लोलुपः - | Lustful person |
| घट्टनम् - | To collide | वलितम् - | Turned sideward |
| जागर्ति - | Still fresh in memory | वाचालः - | Talkative |
| तन्तुः - | Thread | षीष्कारः - | Whistling |
| तमाखुः - | Tobacco | स्विन्नः - | Perspired |
| तालः - | Lock | हृदयस्तम्भनम् - | Heart failure |
| तालवृक्षः - | Palm tree | | |
| तैलपः - | Cockroach | | |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां एप्रिल-८९ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा फेब्रवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'डिसेम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **आवां विजयाय समुद्योगिनौ।**

द्वितीयचित्रम् - **आवां तु तरणाय समुत्साहिनौ।।**

प्रेषिका - डी. ललिता, १०-३-६१, गौतमीनगरम्, कोव्वूरु (आ.प्र.)।



# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# घटी सम्यक् नास्ति

प्राणेशः – किं भोः, हस्ते घटी न दृश्यते? किं कुत्रापि नष्टा?

I say, I don't see the watch on your wrist! You lost it somewhere?

जीवनः – न, घटी सम्यक् नास्ति। अतः गृहे स्थापितवान्।

No. It is not in condition. So I have left it at home.

प्रा – समीकरणार्थं न दत्तवान् वा?

You didn't give it for repairs?

जी – न भोः ...।

No .....

प्रा – किमर्थम्? किं धनं नास्ति?

Why? No money, is it?

जी – धनं नास्ति इति न। सा घटी अतीव प्राचीना। मम अग्रजेन मह्यं दत्ता आसीत्। बहुवारं समीकारितम्। तथापि अल्पे एव काले दुष्यति।

Not that. It is too old. It was given to me by my elder brother. Got it repaired many times, but it goes out of order very frequently.

प्रा – तर्हि किं नूतनां घटीं क्रीणाति?

You want to buy a new one?

जी – तदेव उचितम् इति चिन्तयामि।

I think that would be better.

प्रा – कदा तर्हि क्रयणम्?

Then when do you want to buy?

जी – प्रायः मासद्वयानन्तरम्। तदा मया अधिलाभः प्राप्यते। तेन धनेन क्रेष्यामि इति चिन्तयन् अस्मि।

Probably after two months, when I get my bonus. I want to buy with that money.

प्रा – तावत्पर्यन्तम्?

Till then?

जी – तावत्पर्यन्तं किं, घटीं विना एव व्यवहारः। किं घटीं विना व्यवहारः असाध्यः?

What till then? I have been carrying on without a watch. Is nothing possible without a watch?

प्रा – असाध्यः इति न। तथापि ....।

I didn't mean that. Even then....

जी – कानिचन दिनानि खलु एवं यापनीयानि? अतः चिन्ता नास्ति।

Only a few days to go isn't it? So nothing to bother.

No share prices,
no political fortunes, yet...

# "Over 40% of Heritage readers are professionals or executives, 61% from households with a professional / executive as the chief wage earner. Half hold a postgraduate degree or a professional diploma."

– from an IMRB survey conducted in Oct. 1986




It's an unusual magazine. It has a vision for today and tomorrow.

It features ancient cities and contemporary fiction, culture and scientific developments, instead of filmstar interviews and political gossip. And it has found a growing readership, an IMRB survey reveals. Professionals, executives and their families are reading The Heritage in depth – 40% from cover to cover, 42% more than half the magazine.

More than 80% of The Heritage readers are reading an issue more than once.

And over 90% are slowly building their own Heritage collection.

Isn't it time you discovered why?



## THE HERITAGE



CMP-2155

**So much in store, month after month.**

